


THE

# VIZIANAGRAM SANSKRIT SERIES

UNDER THE SUPERINTENDENCE OF

ARTHUR VENIS M. A. Oxon.

PRINCIPAL, SANSKRIT COLLEGE, BENARES.

THE

# SIDDHÂNTALEŚA

OF

APPAYADÎKSHITA

WITH EXTRACTS FROM THE

# ŚRÎKṚISHṆÂLAMKÂRA

OF

ACHYUTAKṚISHṆÂNANDATÎRTHA.

EDITED BY

MAHÂMAHOPÂDHYÂYA GAṄGÂDHARA ŚÂSTRÎ MÂNAVALLÎ

PROFESSOR, SANSKRIT COLLEGE, BENARES.

VOL. I. PART I.

SANSKRIT TEXT.



PRINTED AND PUBLISHED BY

E. J. LAZARUS & Co., BENARES.

SOLD ALSO BY GANESH DAS AND CO., CHOWK, BENARES,

AND BY JAYESTHARAM MUKUNDJI AND CO., BOMBAY.

1890.

# सिद्धान्तलेशसंग्रहः ।

सर्वतन्त्रस्वतन्त्रश्रीमदप्पयदीक्षितविरचितः



श्रीमदच्युतकृष्णानन्दतीर्थकृतायाः श्रीकृष्णालंकाराख्यायाः
व्याख्यया उद्धृत्यावश्यकटिप्पणीभिः समलंकृतः ।



काशिकराजकीयसंस्कृतपाठशालायां साहित्यशास्त्रप्रधाना-
ध्यापकेन महामहोपाध्यायेत्युपाधिधारिणा मानवल्ल्यु-
पाख्यगङ्गाधरशास्त्रिणा संशोधितः ॥



काश्याम् ।

ई. जे. लाजरसकम्पन्याख्येन स्वमुद्रालये मुद्रितः ।

संवत् १९४६ ।

## ॥ भूमिका ॥

अथैष उपक्रम्यते सिद्धान्तलेशसंग्रहाख्यो वेदान्तनिबन्धो मुद्रयित्वा प्रकाशयितुम् ।

अस्य च प्रणेता विश्वविख्यातवैदुषीविभवः श्रीमानप्पयदीक्षितो नाम । अयं दक्षिणदेशेषु काञ्चीपुरीसमीपवर्तिन्यडयपल्लीनामके ग्रामे ऽजनिष्ट वसन्ति चाधुनाऽपि तद्वंशजास्तत्रेति चिदम्बरक्षेत्रे द्राविडाक्षरैर्मुद्रिताया ब्रह्मविद्यापत्रिकाया अवगम्यते । आङ्गलभाषानिर्मितेतिहासे तु अप्पयदीक्षितस्य कुटुम्बकं तञ्जोरमण्डलान्तर्गते कोम्बकोणंमायवारंपुरयोर्मध्ये तिरुवलकुडुइत्याख्ये ग्रामे उवास यत्र तस्मात् षष्ठी संततिरद्यापि निवसति स्मेत्यभिदधे । अयमितः एकपञ्चाशदधिकशतद्वयपरिमितवत्सरेभ्यः प्राक् १६३६ संख्यकेशबीयवर्षे भुवमलंचकारेति तद्भ्रातृपौत्रकृतनीलकण्ठविजयाभिधप्रबन्धनिर्दिष्टकालपर्यालोचनेन लक्ष्यते । उपलभ्यते हि तत्र अष्टत्रिंशदुपस्कृतसप्तशताधिकचतुःसहस्रेषु । कलिवर्षेषु गतेषु ग्रथितः किल नीलकण्ठविजयो ऽयमिति लेखः । नीलकण्ठविजयनामकचम्पूप्रबन्धनिर्माता नीलकण्ठदीक्षितो ऽप्पयदीक्षितभ्रातृपौत्र इति तद्ग्रन्थान्तिमलेखेन तेनैवाध्यापित इति यो ऽतनुतानुजसूनुजमनुग्रहेणात्मतुल्यमहिमानमिति त्यागराजस्तवस्थपद्येन च प्रतीयते । आङ्गलभाषोपनिबद्धयोरितिहासयोस्तु १५२० खीष्टवर्षे ऽप्पयदीक्षित आसीदिति दृश्यते परमिदं प्रदर्शितब्रह्मविद्यापत्रिकोक्तकालेन विरुध्यते । यतो नीलकण्ठविजयनिर्माणसमये ऽतीतकल्यब्दाः ४७३८ सांप्रतमतीतकल्यब्दाः ४९९० अतस्तस्येतः पूर्वं निर्माणकालः २५२ अतस्तस्य खीष्टशककालः १६३८ स च त्रिंशे वर्षे कविना निर्मितः तत्कर्ता द्वादशे वर्षे ऽप्पीयदीक्षिताच्चरमावस्थापन्नादधीतवानिति ब्रह्मविद्यापत्रिकायामलेखि । ततश्चाप्पयदीक्षितस्थितिकाले खीष्टशकः १६२० स च तदा सप्ततिवर्षवयाश्चेदस्य जन्मकाले खीष्टशकः १५५० इति । अयं च श्रीमद्रङ्गराजाध्वरीन्द्रस्य पुत्रः पितुरेवाध्यगी-

ष्टेति श्रीरङ्गराजमखिनः श्रितचन्द्रमौलिरस्त्यप्पदीक्षित इति प्रथितस्तनूज इति तन्मूलानिह संग्रहेण कति चित्सिद्धान्तभेदान् धियः शुद्ध्यै संकलयामि तातचरणव्याख्यावचःख्यापितानिति चैतद्ग्रन्थान्तिमादिमश्लोकदर्शनादवसीयते । अयं च सप्ततेरुपरि वर्षाणामायुरनुबभूवेति वयांसि मम सप्ततेरुपरि नैव भोगे स्पृहा न किं चिदहमर्थये शिवपदं दिदृक्षे परमिति तदन्तिमावस्थोदीरितश्लोकदर्शनेन स्फुटमवधार्यते । अयं च द्राविडजातीयो ब्राह्मण इति तदीयं कुवलयानन्दग्रन्थमनूद्याक्षेपं तच तच यत्तु द्रविडपुङ्गवेनोक्तमिति निर्दिशतो रसगङ्गाधरे जगन्नाथपण्डितराजस्य लेखेन विज्ञायते । अयं च दैवतेषु शिवमेव सकलसुरोत्कर्षभाजममन्यतेति सुदृढमावेदयन्ति तद्विरचिता भूयांसः शिवतत्त्वविवेकरत्नत्रयपरीक्षाप्रभृतयः प्रबन्धाः । अयमादौ शिवोत्कर्षप्रतिपादके श्रीकण्ठवेदान्तदर्शने समुपजातश्रद्धस्तन्मतानुसारिणो बहून् निबन्धान् निर्माय श्रीनृसिंहाश्रमस्वामिभिर्बोधितः शाङ्करे ऽद्वैतदर्शने प्रविश्य परिमलादिनिबन्धनिर्माणेन शङ्कराचार्यमतानुगो बभूवेति वैकुण्ठे शुण्ठकोलाहलमयकलहोल्लुण्ठने कण्ठशक्तिश्रीकण्ठाचार्यकण्ठोदितनयसरणिव्याकृतौ कुण्ठितो न । इत्येवं शिक्षितश्चाद्वयनयगुरुभिर्दक्षिणामूर्तिरूपैर्दक्षो ऽभूद्दीक्षितो ऽसौ परिमलकृतितः शङ्कराचार्यपक्ष इति श्रीमद्विश्वविख्याताहोबलशास्त्रिकृतेशानस्तुतिस्थश्लोकस्य भट्टरामेश्वरकृततद्व्याख्यानस्य च दर्शनेन स्पष्टमधिगम्यते । एतावन्मात्रेण तस्मिन्नविश्वासं प्रकटयता तञ्जोरराजपुस्तकालयसूचीपत्रं १८७९ खीष्टशके लन्दननाम्नि नगरे मुद्रयता बर्नेल्साहिबेन अप्पयदीक्षितः साभिनिवेशः पक्षपात्यासीच्छैववेदान्ते ऽतस्तन्निर्मिता एतद्ग्रन्थसदृशा असमीक्ष्य कृता ग्रन्था न शक्यन्ते ऽङ्गीकर्तुं निष्पक्षपातवेदान्तविषयप्रदर्शकत्वेनेत्यभ्यधायि सिद्धान्तलेशसंग्रहोल्लेखे परमिदं न तथा ऽऽदरणीयं विचारशालिभिस्तद्व्यवस्थापने मीमांसाद्वयानुगृहीतामितिहासपुराणाद्यर्थोपबृंहितां शैलीमनुसंदधानैः प्रमाणपरतन्त्रैरास्तिकैः । विशेषतश्च सिद्धान्तलेशसंग्रहविषये यतो ऽत्र केवलं निरूपिताः सिद्धान्तविषये पूर्वाचार्याणां मतभेदाः । अयं विजयनगराधिपतेर्नरसिंहापराभिधनरसदेवभूपतेः पुत्रस्य कृष्णराजस्य व्यङ्कटपत्यपराभिधस्य सभायामष्टसु दिग्गजतया ख्यातेषु पण्डितेषु प्रथम इति

दृश्यते आङ्गलेतिहासे लेखः । अस्य च नामाप्पदीक्षित इत्यप्पयदीक्षित इति च द्वेधा ऽप्युपलभ्यते स्वकृते कुवलयानन्दे ऽमुं कुवलयानन्दमकरोदप्पदीक्षित इति तदनुजपौत्रकृते नीलकण्ठविजये च श्रीमानप्पयदीक्षितः स जयति श्रीकण्ठविद्यागुरुरिति च । परं पर्यालोचने तु नात्र भेदः स्वयं प्रयोगे विनीतिं प्रचिकटयिषुरप्पदीक्षित इति प्रायुङ्क्त तदन्तेवासी तु तत्रादरद्योतकमार्यपदापभ्रंशं सांप्रतमप्यान्ध्रदेशीयैस्तथाविधे ऽर्थे प्रयुज्यमानम् अय इति पदं संयोज्य तदेव प्रायुङ्क्तेति । अयं च शाङ्करदर्शने श्रीशङ्करभगवत्पादब्रह्मसूत्रभाष्यस्य व्याख्याया वाचस्पतिमिश्रकृताया भामत्या व्याख्यानं कल्पतरुं परिमलाख्याया विस्तृतया टीकया व्याचख्यावातेने च बहुविधेषु शास्त्रेषु बहून् विद्वद्वरैरादृतान् चतुरधिकशतं प्रबन्धान् । सांप्रतमप्युपलभ्यन्ते साहित्ये कुवलयानन्दचित्रमीमांसावृत्तिवार्तिकाभिधाः शैवोत्कर्षप्रतिपादनपराः शिवतत्त्वविवेकरत्नत्रयपरीक्षाप्रभृतयो मीमांसादर्शने विधिरसायनोपक्रमपराक्रममुखाः शाङ्करदर्शने परिमलसिद्धान्तलेशसंग्रहादयो ये ऽत्र विस्तरभीरुणा सर्वेषां तेषामुल्लेखं नात्युपयोगिनं मन्यमानेन च मया न साकल्येन नामतो निर्दिष्टाः । अमुं च सिद्धान्तलेशसंग्रहाभिधं नातिविस्तरमारूढं परां काष्ठां प्रौढेरवश्यविज्ञेयसकलसिद्धान्तपरिपूर्णं च मुद्रयितुमुपक्रममाणेन मया संपादितानि चत्वारि पुस्तकानि द्रविडाक्षरमुद्रितमेकमपरं च प्राचीनतमं श्रीयुतवेनिससाहिबमहोदयदत्तमिति द्वे मूलमात्रे सटीके च द्वे मदीयसुहृद्वरश्रीराममिश्रशास्त्रिण एकं माननीयश्रीतारकाश्रमयतिवरप्रतिष्ठापिततारकमठस्थपुस्तकालयादुपलब्धमपरमिति । तेषु प्रायः समानार्थानपि पदरचनामात्रे बहून् भेदानुपलभमानेनोपेक्ष्य नितान्तमनुपयुक्तप्रदर्शनान् पाठभेदान् न्यवेश्यन्त स्तोकमप्यर्थभेदमापन्नाः पाठा उपरि निर्दिष्टक्रममनुसृत्य । अधस्तादवास्थाप्यत च विपश्चिद्वरश्रीमदच्युतकृष्णानन्दतीर्थविरचिताया एतत्प्रबन्धरत्नप्रभाया इव सर्वाकारोज्ज्वलाया व्याख्यायाः साकल्येन निवेशयितुमुचिताया अपि विस्तरं परिजिहीर्षता विषमतमस्थलेष्वावश्यकी टिप्पणी क्व चित्त्व तदविवृते ऽर्थेऽभिनवा च । निर्दिष्टाश्चैतद्ग्रन्थोपन्यस्तपूर्वोत्तरमीमांसासूत्राणामध्यायपादसूत्रसंख्याङ्का व्यरच्यन्त च मूले विषयभेदएव पङ्क्तिभेदाः । तदेवमवस्थिते-

नापि मया क्रियमाणएतद्ग्रन्थमुद्रणे मदीयमतेरपाटवेन सीसकाक्षरयोजक-दोषेण वा सुलभानि स्खलितानि क्षाम्यन्तो गुणैकदृष्टय: सहृदया आस्वादयन्तो निखिलक्षीरोदनिर्मथननि:सृतं कलशस्थमिवामृतं सुरा अशेषवेदान्त-विचारनिर्गतमल्पीयसा श्रमेण नि:श्रेयसनिदानं सिद्धान्तं सफलयन्तु मामकीनं श्रमं प्रीयतां चानेन व्यापारेण भगवानन्तर्यामी श्रीकाशीविश्वेश्वर इत्यभ्यर्थयते ।

सं० १९४६ माघ सुदि ५ स्थिरे

मानवल्ल्युपाख्यो गङ्गाधरशास्त्री ।



# शुद्धिपत्रम् ।

| पृ॰ | पं॰ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | ५ | जननर्हारिणी | जननर्हारणी |
| २ | २ | सदर्शपरिपूरण | सदंशपरिपूरण |
| २ | १७ | विनाऽऽक्षेप | विनाऽऽक्षेप |
| ५ | २ | मवतिष्टते | मवतिष्ठते |
| ५ | ४ | प्रतिबिम्बात्प्रति | प्रतिबिम्बात् प्रति |
| १२ | १० | कृत्स्नस्य | कृत्स्नस्य |
| १४ | १७ | ईशो शुद्धा | ईशो विशुद्धा |
| १५ | २८ | भाववर्त्वं | भाववस्त्वं |
| १८ | ६ | चैलन्या | चैतन्या |
| २२ | ३१ | नंदोषः | नं दोषः |
| २४ | २२ | वृत्युपारूढस्य | वृत्त्युपारूढस्य |
| २८ | २ | मेधेतिचेत् | मेधेति चेत् |
| २९ | २३ | द्रा॰ पुस्तक | द्रा॰ २ पुस्तक |
| ३० | ७ | पर्वतत्तद्वृत्ति | पर्वततद्वृत्ति |
| ३० | ८ | प्रामाण | प्रमाण |
| ३२ | २ | भासिकस्तथापि | भासिकास्तथापि |
| ४० | १५ | चाकचिक्ये | चाकचक्ये |
| ४१ | ५ | दुंष्टेन्द्रिय | दुंष्टेन्द्रिय |
| ४९ | ५ | अत्राहुस्तत्व | अत्राहुस्तस्य |
| ५२ | ८ | कुपठना | गुपठना |
| ६१ | १६ | प्रोसूना | प्रेप्सूना |
| ६३ | २८ | पूनर्गोलक | पुनर्गोलक |
| ७२ | ७ | द्विचत्वणाः | द्विचत्वणाः |
| ७७ | २२ | ष्टानिष्टाशब्दो | ष्टानिष्टशब्दो |
| ७८ | १३ | उभयानुंस्यूत | उभयानुस्यूत |
| ८१ | २९ | तटप्रयुक्त | तदप्रयुक्त |
| ९५ | १७ | वासिष्टादि | वासिष्ठादि |
| १०५ | ११ | भ्युप- | भ्युपग- |
| १०५ | २० | स्काष्ट | स्काष्ठ |
| १०५ | २१ | काष्टं | काष्ठं |

# सूचीपत्रम् ।

धनुराकारचिन्हाभ्यां रहिते केवलं पदम् ।
तद्युक्ते त्वर्थविवृतिः प्राज्ञैरित्यवधार्यताम् ॥


| | पृष्ठे पङ्क्तौ |
|---|---|
| अकृताभ्यागमः .. .. | १४-१३ । (१४ टि॰ २) |
| अग्रभागः ... .. ... | २६-११ । (२६ टि॰ ४) |
| अज्ञाननिवर्त्तकनिरूपणम् ... ... | (१००-१०) |
| अज्ञानसत्तायुक्तस्य प्रपञ्चस्य प्रमाणेन प्रत्यक्षत्वम् | (७८-९) |
| अज्ञानस्य जीवाश्रितत्वम् ... ... | (२२-३) |
| अज्ञानस्य पुरुषाश्रितत्वमात्रम् ... | (३०-२३) |
| अज्ञानलेशानुवृत्तिः ... ... | (२१-१७) |
| अज्ञानस्य विषयाश्रितत्वमात्रम् ... . | (३१-६) |
| अज्ञानस्य सांशत्वाङ्गीकारादेकोपाधौ निवृत्तस्याप्युपाध्यन्तरेऽनुवृत्तिसम्भवः ... ... | (२१-१६) |
| अज्ञानान्तरनाशः ... ... | (२७-१०) |
| अज्ञानानां नानात्वं स्वीकृत्य तद्भेदस्याननुसन्धानप्रयोजकत्वम् | (७९-१४) |
| अद्वैतविद्याकृन्मते प्रतिबिम्बस्य मिथ्यात्वम् ... | (६१-२०) |
| अद्वैतविद्याचार्यमते अनिर्वाच्येत्राविद्यानिवृत्तिः | (१०७-२१) |
| अद्वैतविद्याचार्यमते आनन्दस्यैकत्वेऽप्यध्यस्ततारतम्यम् | (३५-१७) |
| अद्वैतविद्याचार्यमते आपरोक्ष्यस्य चैतन्यधर्मत्वमेव न ज्ञानधर्मत्वम् ... ... ... | (९९-१) |
| अद्वैतविद्याचार्यमते स्वाप्नप्रपञ्चस्य न प्रातिभासिकत्वमपि तु व्यावहारिकत्वम् ... ... | (७३-८) |
| अद्वैतात्मप्रतिपादकभाषाप्रबन्धश्रवणनिवृत्तिफलको वेदान्तश्रवणनियमविधिः ... ... | (५-१३) |
| अध्यस्तरजतस्येदमंशाऽज्ञानमेवोपादानम् ... | (३८-१०) |
| अधिष्ठानम् ... ... | (३८-७) (३८-८) |
| अन्तःकरणभेदाभेदयोरनुसन्धानाननुसन्धानप्रयोजकत्वम् | (७९-१२) |
| अन्तःकरणस्य कर्त्तृत्वात् तत्सान्निध्यादात्मनि सुखाद्यध्यासः | (७७-१६) |
| अन्तःकरणादिविशिष्टचैतन्यस्य तादृशचैतन्यान्तराद् भेदाद् व्यवस्था ... ... | (७७-११) |
| अन्तःकरणे चिदाभासस्य सुखाद्याश्रयत्वम् ... | (७७-४) |
| अन्तःकरणोपधानेन जीवः साक्षी ... | (३३-२२) |
| अनध्यस्तरजतज्ञानाभावः ... ... | (४४-११) |
| अनुमन्ता ... ... | (३३-टि॰ १) |
| अनुवृत्तमूलाविद्याया एवाऽविद्यालेशत्वम् ... | (१०७-५) |
| अपच्छेदन्यायः ... ... | ५१-२१ (५५-१९) |
| अपरोक्षत्वम् ... ... | ४५-२२ (४५-टि॰ ३) १११-३ |
| अपरोक्षज्ञानजनकत्वेन नियमविधिः ... | (६-१८) |
| अपरोक्षात्मविषयकत्वेन शब्दस्याऽपरोक्षज्ञानजनकत्वम् | (९८-१६) |
| अपूर्वविधिः ... ... | (१-१४) (१-१५) |
| प्रकटार्थकारमतेनात्मदर्शनविधेरपूर्वविधित्वम् | (२-२२) |

पृष्ठे पङ्क्तौ

अपोहः ... ... ... ७-६ । (७-टि॰ १)
(अभिभवः) नाशः संवेष्टनम् अपसरणं वा ... (२७-२) (२७-७) (२७-१३)
अभेदाभिव्यक्तिस्वरूपनिरूपणम् (वृत्तिद्वारा एकीभावः) (२६-१)
अमुख्याधिकारिकृतवेदान्तविचारस्य जन्मान्तरीयविद्यावा-
प्त्युपयोगित्वम् ... ... (६३-१०)
अवगुण्ठनम् ... ... ४३-१७ । (४३-टी॰ ७)
अवच्छेदपक्षः ... ... (१८-६)
अवस्थारूपाज्ञानस्य सादित्वम् ... (२७-१८)
अवस्थारूपाज्ञानानामनादित्वम् ... (२७-१६)
अविद्या ... ... ... ५-२ । (१४-३)
अविद्यातिरिक्तस्यैव प्रत्यक्षसमये सृष्टिः ... (७१-१४)
अविद्यानिवृत्तिस्वरूपनिरूपणम् । आत्मरूपैव सा (१०७-१०)
अविद्यालेशनिरूपणम् । विक्षेपशक्त्यंशस्य तद्रूपत्वम् (१०७-१)
अविद्यासंस्कारस्याऽविद्यालेशत्वम् ... (१०७-४)
अविद्योपाधिको जीव एव साक्षी ... (३३-१५)
असत्त्वम् ... ... (५६-१३)
असंन्यासिनामपि त्रैवर्णिकानामेव ज्ञानोत्पत्तिनिरूपणम् (८८-१३)
अहङ्काराद्यनुसन्धानोपपादनम् । वृत्तेरनित्यत्वात्संस्कारोपपत्तिः (३६-१७)
अहङ्कारानवच्छिन्नस्यान्तरस्य चैतन्यस्य स्वाप्नप्रपञ्चाधिष्ठानत्वम् (६७-११)
अहङ्कारावच्छिन्नचैतन्यस्य स्वाप्नप्रपञ्चाधिष्ठानत्वम् (६८-१६)
अहमाकारवृत्तेर्ज्ञानत्वम् ... ... (३७-२२)
अहमाकारवृत्तेर्ज्ञानत्वाभावः ... (३७-१४)
आत्मा ... ... ... १-११ । ६-१७
आधारः ... ... ३८-७ (३८-८)
आनन्दबोधाचार्यमते आत्मान्या पञ्चमप्रकारा अविद्यानिवृत्तिः (१०७-१६)
आनन्दमयः ... ... (१६-४)
आनन्दस्यावृतत्वम् ... ... (३६-१)
आनन्दापरोक्षेऽपि तदभेदाध्यासात् पुरुषान्तरानन्दापरोक्ष्या-
भावेन विद्यया तदध्यासनिवृत्तौ तदापरोक्ष्यम् (१११-३)
आवरणम् ... ... (२८-८)
आवरणशक्तिप्रतिबन्धरूपो ऽज्ञानतिरस्कारः (२८-१५)
आवरणाभिभवः ... ... ३६-१२ (३६-टि॰ २)
आवरणाभिभवस्वरूपनिरूपणम् ... (२६-२१)
आविद्यकजीवेश्वरविभागमतम् ... (२०-८)
इदमाकारा वृत्तिरध्यासकारणम् । रजताकारवृत्तिस्त्वध्यस्तवि-
षया ... ... (४४-७)
ईश्वराश्रिताया मायाया एव प्रपञ्चकारणत्वम् (२२-१६)
ईश्वरोपाधिः ... ... (१४-५)
उपलक्षितस्य चैतन्यात्मनैकीभावः ... (२६-१७)
उपाधिभेदे ऽपि सुखाद्यनुसन्धानसाङ्कर्यापादनम् (७६-१६)
शरीरस्योपाधित्वम् ... ... (७८-३)
उपाधिस्वरूपम् ... ... (१७-२१)
ऊहः ... ... ... ७-६ । (७ टि॰ १)
एकजीववादे हिरण्यगर्भस्य कल्पभेदेन नानात्वाद्विनिगमना-
विरहादेकजीववादः ... ... (२१-४)

पृष्ठे पङ्क्तौ

एकरसत्वम् ... ... ४५–२२ । (४५–टि· ३)

कन्दलना ... ... २७–३ (२७–टि· १)

कर्त्तृत्वस्वरूपनिरूपणम् ... ... (२२–२०)

कर्मणां ज्ञानोत्पत्तावुपयोगनिरूपणम् आश्रमचतुष्टयकर्मणामेव ज्ञानोपयोगित्वम् ... (८६–२३)

कल्पतरुमते विधुरकर्मणामपि नित्यानामेव ज्ञानोपयोगित्वम् ... ... (८७–३)

कल्पितचैतन्यभेदाश्रयणमात्रेण तद्व्यवस्था (७७–२३)

कल्पिताहमाकारवृत्त्या संस्कारोपपत्तिः ... (३७–६)

कायव्यूहः ... ... १७–२३ ।

कार्यसाक्षात्कारवत्स्वरूपं कर्त्तृत्वम् ... (२३–५)

कार्यानुकूलज्ञानवत्त्वं कर्त्तृत्वम् ... (२२–२२)

काल्पनिकस्य ब्रह्मानन्दाभावस्याऽविद्यानिवृत्त्या निवृत्तिः (११०–१७)

कूटस्थचैतन्यम् ... ... १०–५ (१४–२३)

कृतहानम् ... ... १४–१३ । (१४–टि· २)

कौमुदीमते परमेश्वरस्यैव रूपभेदः साक्षी (३३–१)

कौमुदीमते स्वरूपज्ञानेन सर्वावभासकत्वं सर्वज्ञत्वम् (२३–२६)

घट्टकुटीप्रभातवृत्तान्तः ... ... ११६–१ । ४०–१४ (४०–टि· ५)

चित्सुखाचार्यमते अहङ्कारादीनामपि केवलसाक्षिवेद्यत्वेन प्रातिभासिकत्वम् ... ... (७२–१६)

चित्सुखाचार्यमते मुक्तौ दुःखाभावस्य न स्वतःपुरुषार्थत्वं किन्तु अनवच्छिन्नानन्दप्राप्तेरेव ... (१०६–२४)

चिदाभासः ... ... १६–१६

चिदुपरागः ... ... (२५–१३) (२५–२०)

चिदुपरागार्थं ब्रह्मचैतन्याभेदाभिव्यक्त्यर्थं वा वृत्तिनिर्गमापेक्षा (४८–३)

चैतन्यस्य वृत्तिद्वारकः परम्परासम्बन्धः ... (२५–६)

चैतन्याभिव्यक्त्यर्थं वृत्त्यावश्यकत्वम् ... (४५–८)

जगज्जन्मभङ्गानां समुदितानामन्यमते ब्रह्मलक्षणत्वम् (६–२२)

जीवः ... ... (१३–२३)

जीवब्रह्माभेदगोचरज्ञानस्यैव मूलाज्ञाननिवर्त्तकत्वम् (१०३–४)

जीवस्यैव सर्वप्रपञ्चोपादनत्वम् ... (१२–१८)

जीवाभासः ... ... (२१–२)

जीवाणुत्वनिराकरणम् ... ... (८०–१६)

जीवेश्वरस्वरूपनिरूपणम् ... (१३–२०)

जीवैकत्वम् ... ... (२०–१६)

जीवैकत्वानेकत्वविचारः ... (२०–१५)

जीवोपाधिः ... ... १४–६

जीवोपाधिभेदसम्भावना आत्माऽभेदेऽपि उपाधिभेदेन सुखदुःखादिव्यवस्था ... ... (७६–१)

जीवोपाधिभेदसम्भावनोपपत्तिनिरूपणम् । मनसां भेदात्तस्यैव सुखाद्याश्रयत्वम् ... (७६–६)

ज्ञानाज्ञानयोर्विरोधोपपत्त्यर्थं वृत्तिनिर्गमावश्यकत्वम् (४६–१२)

ज्ञानेनैकाज्ञाननाशेऽप्यज्ञानान्तरानुवृत्तिः (२८–३)

तत्त्वविवेकमते रूपभेदेन भिन्नायां मायायां चित्प्रतिबिम्ब ईश्वरः अविद्यायां चित्प्रतिबिम्बो जीवः (१४–१)

पृष्ठे पङ्क्तौ
तत्त्वशुद्धिकारमते प्रत्यक्षस्य सन्मात्रग्राहकत्वेन घटाद्यविषयकत्वम् ... ... (४६-५)
तत्त्वशुद्धिकारमते साक्षात्कारजन्यस्मरणत्वेन सर्वज्ञत्वम् (२३-२१)
तत्त्वशुद्धिमते ब्रह्मकोटिरेव साक्षी प्रतिभासतो जीवकोटिः (३३-११)
तत्त्वावेदकत्वेऽपि कालत्रयाबाध्यत्वस्य प्रत्यक्षेण ग्रहणासम्भवाच्छ्रौतस्य मिथ्यात्वस्य बाधाभावः (५१-११)
तिरस्कारः ... ... (२८-२०)
तैजसः ... ... (१६-१६)
त्रैवर्णिकानां संन्यासाधिकारः ... (६१-१६)
दग्धतृणकूटदहनोदाहरणेन चरमवृत्तिनिवृत्त्युपपत्तिः (१०४-१६)
दग्धलोहपीताम्बूदाहरणेन तदुपपत्तिः ... (१०४-१५)
दृग्दृश्यविवेकोक्तो विशेषः ... (१७-१)
दृश्यस्य ज्ञानानतिरिक्तत्वम् ... (७२-६)
दृष्टानुरोधेन वृत्तिनिर्गमस्य फलितत्वम् ... (४८-१)
दृष्टिसृष्टिवादिमते प्रपञ्चस्य प्रत्यक्षसमयएव सृष्टिः (७०-२४)
दृष्टिसृष्टिवादिमते वियदादिसृष्टितत्क्रमादेः श्रुतितात्पर्याविषयत्वम् ... ... (७१-१६)
देशकालविशेषणान्तरविशिष्टाज्ञानानां द्वितीयादिवृत्तिनाश्यत्वम् ... ... (२६-१५)
धारावाहिकम् = द्वितीयवृत्त्या पूर्वतिरस्कृताज्ञानतिरस्कारपरिपालनम् ... ... (२८-२२)
धीवासनाप्रतिबिम्ब ईश्वरः ... (१५-१६)
ध्वंसस्य प्रतियोग्यतिरिक्तजन्यत्वनियमे व्यभिचारप्रदर्शनम् (१०४-१७)
निद्रारूपमूलाज्ञानावस्थाभेदस्य स्वाप्नप्रपञ्चोपादानत्वम् (६६-१६)
निदिध्यासनम् ... ... ६-७। (६-१३)
नियमविधिः ... ... १-१४। (१-१८)
निर्गुणस्याप्युपासनोपपादनम् ... (६४-१७)
निर्विचिकित्सम् ... ... ६-५। (६-टि॰ २)
नृसिंहभट्टमते सुखमाकारवृत्तेरभावः .. (३८-१६)
न्यायचन्द्रिकामते अज्ञानान्तराणां तिरस्कारः (२६-५)
न्यायसुधाकृन्मते प्रत्यक्षस्य घटादिविषयकत्वेऽपि सत्ताया अधिष्ठानगताया एव तत्र भानम् ... (५०-११
पञ्चदश्युक्तो जीवेश्वरभेदः ... (१४-१७)
पदार्थतत्त्वनिर्णयकारमते मायाब्रह्मणोरुभयोर्जगदुपादानत्वम् ... ... (१२-२२)
परकृतिः ... ... ५८-२। (५८-टि॰ १)
परतस्त्वम् ... ... ७-११ (७-टि॰ ४)
परस्पराविवेकः ... ... ६-२१ (६-टि॰ ६)
परिणामः ... ... (१०-६) (१०-१०) (१०-टि॰ ५ (१०-टि॰ १
परिसंख्याविधिः ... ... १-१४ (२-३)
परिसंख्याविधौ वार्त्तिकमतम् ... (७-१४)
पानादिक्रियायां जलत्वेनैव प्रयोजकता न सत्यजलत्वेन (७४-१)
पारमार्थिकजीवः ... ... (१७-४)
पुरुषविषयकणाश्रयभेदेनाज्ञानद्वैविध्यम् ... (३०-१३)

पृष्ठे पङ्क्तौ

प्रकटार्थकारमते स्वोपाधिमायापरिणामैः प्रपञ्चापरोक्षत्वं सर्वज्ञत्वम् ... ... (२३-१७)
प्रकटार्थविवरणमते मायायां चित्प्रतिबिम्बस्येश्वरत्वम् । अविद्यायां चित्प्रतिबिम्बस्य जीवत्वम् (१३-२०)
प्रकाशः ... ... ३६-३ (३६-टि० १)
प्रतिजीवमविद्याभेदाभ्युपगमेन बद्धमुक्तव्यवस्थोपपत्तिः (२२-७)
प्रतिबिम्बसत्यत्वनिराकरणम् ... (६०-१५)
प्रतिबिम्बाध्यासे विक्षेपशक्त्यंशेनानुवर्तमानस्याज्ञानस्य प्रतिबिम्बाध्यासोपादानत्वम् ... (६५-३)
प्रतिमुखाध्यासपक्षः ... ... ६३-१८ (६३-२२)
प्रत्ययाभ्यासः ... ... ६६-६
प्रत्यक्षेणाद्वैतश्रुतेरबाधनिरूपणम् ... (४८-१)
प्रत्यक्षेणाबाध्यत्वग्रहणासम्भवे ऽप्यबाध्यत्वे उत्कर्षापकर्षस्वीकारेण ब्रह्मज्ञानेतराबाध्यत्वस्य ब्रह्मज्ञानबाध्यत्वस्य चाविरोधः ... (५१-११)
प्रत्यक्षस्य वृत्तिवेद्यत्वम् । परोक्षस्य चैतन्यवेद्यत्वम् (४५-२)
प्रपञ्चस्वरूपानिषेधेऽपि तस्य तात्त्विकत्वनिषेधः (५६-१)
प्रातिभासिकजीवः ... ... (१७-६)
प्रातिभासिकप्रपञ्चः ... ... १२-११ (६०-८)
प्राप्तबाधः ... ... (५६-१८)
प्रामाण्यम् ... ... (५०-१८)
प्राज्ञः ... ... (३३-६) १६-१७ (१६-१८)
बद्धमुक्तव्यवस्थासिद्धये अन्तःकरणोपाधिभेदेन नानाजीववादः ... ... (२१-११)
बाध्यत्वाबाध्यत्वयोर्विरोधे ऽपि पश्चादुत्पन्नत्वेन बाध्यत्वज्ञानस्याबाध्यत्वज्ञानबाधकत्वम् ... (५१-२०)
बाल्यपाण्डित्यमौनानि ... (६-१०)
बिम्बचैतन्यस्यैव स्यान्प्रपञ्चाधिष्ठानत्वम् (६६-१)
ब्रह्मगतसत्त्वस्य प्रपञ्चे प्रसक्तस्य श्रुतिकृतो निषेधः (५६-१६)
ब्रह्मचैतन्येन समर्पितस्य प्रतिबिम्बस्य जीवेन सहैकीभावः (२६-६)
ब्रह्मणः कारणत्वविचारे सङ्क्षेपशारीरकमते शुद्धस्योपादानत्वम् ... ... (१०-११)
ब्रह्मणः कारणत्वस्वरूपनिरूपणम् ... (१०-५)
ब्रह्मणः सर्वज्ञत्वस्वरूपनिरूपणम् ... (२३-१३)
ब्रह्मणो विवर्त्तरूपोपादानत्वम् ... १०-५ (१३-२)
ब्रह्मलक्षणे जगज्जन्मस्थितिभङ्गेष्वेकैकस्य ब्रह्मलक्षणत्वं कौमुदीमते ... ... (६-१७)
ब्रह्मविषयकस्य शाब्दज्ञानस्याप्यपरोक्षत्वोपपादनम् (६८-६)
ब्रह्मसाक्षात्कारे कारणनिरूपणम् । प्रत्ययाभ्यासस्य ब्रह्मसाक्षात्कारकारणत्वम् ... (६६-८)
ब्रह्मसंस्थः ... ... ७-१६ । (७-१८)
ब्रह्मज्ञानस्यैवाज्ञाननिवर्त्तकत्वम् ... (१०५-२३)
ब्रह्मज्ञानारूढचैतन्यप्रकाशस्यैवाज्ञाननिवर्त्तकत्वम् (१०५-१५)
ब्रह्माकारवृत्तिनाशकनिरूपणम् । कतकरजोदृष्टान्तेनाज्ञानान्तरनाशकस्य ब्रह्मज्ञानस्य स्वनिवर्त्तकत्वम् (१०४-११)

पृष्ठे पङ्क्तौ

ब्रह्मानन्दस्य प्राप्यत्वोपपादनम् । कण्ठचामीकरन्याये-
नौपचारिकी प्राप्तव्यता ... (११०-१२)
ब्रह्मानन्दोक्तो जीवेश्वरविभागः ... (१६-१)
ब्राह्मणस्यैव संन्यासपूर्वकं वेदान्तश्रवणाधिकारः क्षत्रि-
यवैश्ययोस्तु तदपरंपरयैव ... (६२-१)
भामतीमते कर्मणां विविदिषोत्पादनोपयोगित्वम् (८५-५)
भारतीतीर्थमते सर्वविषयवासनासाक्षित्वरूपं ब्रह्मणः
सर्वज्ञत्वम् ... ... (२३-१३)
भावनाप्रचयसाहित्येन शब्दस्याप्यपरोक्षज्ञानजनकत्वम् (६८-१३)
मननम् ... ... ४-७ (६-१२)
मनस एव ब्रह्मसाक्षात्कारकरणत्वम् ... (६७-१)
मनसो नियामकत्वेन एकत्राज्ञाननिवृत्तावपि अपरत्राज्ञा-
नानुवृत्त्युपपत्तिः ... ... (२१-२०)
महावाक्यस्यैव ब्रह्मसाक्षात्कारकरणत्वम् (६७-१४)
मायाकारणत्वविचारः ... (१२-२०)
मायिकजीववादे हिरण्यगर्भस्यैव मुख्यं जीवत्वम् अन्येषां
जीवाभासत्वम् ... ... (२०-२१)
मायाब्रह्मणोरुभयोर्जगदुपादानत्वनिर्वाहकमुपादानत्व-
लक्षणम् ... ... (१३-१)
मायाऽविद्याऽभेदवादिमते वियदादिप्रपञ्चे ईश्वरस्यैवा-
न्तःकरणादौ जीवस्यैवोपादानत्वम् ... (१२-४)
मायाऽविद्याभेदवादिमते वियदादिप्रपञ्चे ईश्वरोपादान-
त्वम् । अन्तःकरणादावीश्वरजीवयोरुभयोरप्युपादान-
त्वम् ... ... (११-११)
मायिकजीवेश्वरविभागः ... (२०-८)
मिथ्यात्वम् ... ... (७२-१७)
मिथ्यात्वस्य मिथ्यात्वेऽपि प्रपञ्चसत्यत्वाभावनिरूपणम् (७४-१७)
मिथ्यापदार्थस्याऽर्थक्रियाकारित्वोपपादनम् (७३-४)
मुक्तस्वरूपनिरूपणम् । निर्विशेषचैतन्यरूपेणावस्थानम् (१११-७)
मुक्तिः ... ... ... ७-१७ । (१११-७)
मूलाज्ञानस्यैव प्रतिबिम्बाध्यासोपादानत्वम् (६५-८)
रजताकारवृत्तेर्वैयर्थ्यम् ... (४४-३)
रामाद्वयाचार्यमते अहङ्कारादीनां प्रातिभासकत्वोपपादक-
भाष्यादिग्रन्थानां प्रौढिवादत्वम् ... (७३-१)
लिङ्गम् ... ... (२-८)
हिरण्यगर्भः ... ... (१६-१२)
वाचस्पतिमतेनात्मदर्शने त्रिविधविधित्वाभावः (८-६)
वाचस्पतिमते ब्रह्मण एवोपादानत्वम् । मायायास्तु सह-
कारित्वमात्रम् ... ... (१३-१३)
वाचस्पतिमते सर्वविषयकज्ञानात्मकत्वं सर्वज्ञत्वम् (२४-८)
विज्ञानमयः ... ... (१६-३)
विद्यमानस्याऽपि स्वरूपानन्दस्यापरोक्ष्याऽभावेनापुरुषार्थ-
त्वाद् विद्यया तदापरोक्ष्यात्प्राप्यता (११०-२२)
विधिवादः ... ... (१-११)
वियदादिप्रपञ्चईश्वरस्यैवोपादानत्वमन्तःकरणादौ जी-
वस्यैवोपादानत्वम् ... (११-१६)

पृष्ठे पङ्क्तौ
वियदादिप्रपञ्चस्य प्रतिपुरुषं भेदः ... (२२-१३)
विराट् ... ... ... (१६-१३)
विवर्त्तः ... ... (१०-८) (१०-६) (१०-१०) (१०-टि· ३) (१०-टि· ८)
विवरणमते जीवस्य प्रपञ्चानुपादानत्वाद् वृत्तौ सत्यामवभासः ... ... (२४-१३)
विवरणमते मायाशबलस्येश्वरस्योपादानत्वम् (१०-१५)
विवरणवार्त्तिककारमते श्रुतिप्रत्यक्षयोरुभयोरपि प्रमाणत्वेन तन्निर्वाहाय प्रत्यक्षस्य व्यावहारिकतत्त्वावेदकत्वं श्रुतेस्तु पारमार्थिकतत्त्वावेदकत्वमिति विषयव्यवस्था निर्दोषत्वाच्छ्रुतेः परत्वाच्च (५४-१)
विवरणानुसारिणां मतेन जीवेश्वरभे .: बिम्बप्रतिबिम्बवादः ... ... (१७-११)
विवरणानुसारिमते कर्मणां विद्यायामेवोपयोगित्वम् (८६-१)
विवरणानुसारिमते ब्रह्मणयवहितमनोव्यापारनिवृत्तिफलकः श्रवणनियमविधिः । ... ३-८
विवरणानुसारिमते भिन्नात्मशास्त्रनिवृत्तिफलको वेदान्तश्रवणनियमविधिः ... (४-११)
विवरणैकदेशिमते आत्मदर्शनविधिर्नियमविधिः पूर्ववत् (६-५)
विश्लिष्टोपाधिभेदस्य सुखाद्यननुसन्धानप्रयोजकत्वम् (७८-१५)
विश्वः ... ... ... (१६-२०)
विशुद्धं ब्रह्म जीवाभेदेन साक्षीति तत्त्वप्रदीपिकामतम् ३२-२२
विषयगताज्ञानस्य समानाधिकरणज्ञाननिवर्त्तकत्वाद् वृत्तिनिर्गमस्य फलितत्वम् ... (४७-२३)
विषयाकारवृत्तिसंसृष्टावस्थविषयावच्छिन्नचैतन्यानावरकत्वस्वाभाव्यम् ... (२७—३)
विषयावभासस्पष्टतासिद्धये वृत्त्यावश्यकत्वम् (४५-११)
विषयोपरागः ... ... २५-५ (२५-७)
वृत्तिनिर्गमावश्यकत्वनिरूपणम् ... (४४-२१)
वृत्तिसंयोगेन चैतन्यसंयोगः संयोगजसंयोगः (२५-१४)
वृत्त्या ऽज्ञाननाशे ऽपि वृत्त्युपरमे अज्ञानान्तरस्यावरकत्वम् ... ... (२८-७)
वृत्त्या सह विषयस्य सम्बन्धनिरूपणम् (२५-५)
वृत्त्युपयोगनिरूपणम् ... (२४-१३)
वेदान्तमूलकेतिहासपुराणश्रवणनिवृत्तिफलको नियमविधिः ... ... (५-२१)
वेदान्तवाक्यजन्यस्यैव नियमादृष्टसहितस्य ब्रह्मज्ञानस्य ब्रह्माज्ञाननिवर्त्तकत्वम् ... (१०२-२४)
वेदान्तश्रवणस्यादृष्टद्वारा आमुष्मिकविद्योपयोगित्वम् ... ... ... (६४-११)
व्यावहारिकजीवः ... ... (१७-७)
व्यावहारिकप्रपञ्चः ... १२-१० । (६०-७)
व्यावहारिकप्रपञ्चमात्रईश्वरोपादानत्वम् । प्रातिभासिकप्रपञ्चे जीवस्योपादनत्वम् ... (१२-६)

पृष्ठे पङ्क्तौ
शरीरैक्यभेदयोरनुसन्धानाननुसन्धानप्रयोजकत्वम् (७६-३)
शुद्धचैतन्यम् ... ... १४-१७। (१६-११)
शूद्रस्य ब्रह्मविद्यायामधिकाराभावोपपादनम् (८६-१२)
शूद्रस्यापि विद्यार्थकर्माधिकारित्वम् (८६-१८)
श्रवणविधेर्निर्विचिकित्सपरोक्षज्ञानजनकत्वनियम-
विधिः ... ... (६-१४)
श्रवणविधौ संन्यासनियमः ... (६१-११)
श्रुतेः प्रत्यक्षाद्बलीयस्त्वव्यवस्थितत्वनिरूपणम् (५३-१)
श्रुत्युपजीव्यत्वेन प्रत्यक्षाबाधशङ्कापरिहारः (५८-१५)
सकारणाध्यासनिरूपणम् ... (३८-१)
सङ्क्षेपशारीरकमते ब्रह्मण एवोपादानत्वम् मायायास्तु
द्वारकारणत्वम् ... (१३-१०)
सत्तात्रैविध्यानङ्गीकारेऽपि प्रपञ्चे ब्रह्माविवेकेन सत्ता-
प्रतीतिव्यवस्थापनम् ... (६०-६)
संन्यासापूर्वस्य श्रवणाद्यधिकारिविशेषणत्वम् (६१-४)
संन्यासाश्रमस्यैव विद्योपयोगित्वनिरूपणम् (६०-२०)
संन्यासिनो वेदान्तश्रवणे मुख्योऽधिकारः क्षत्रियवै-
श्ययोः संन्यासाभावादमुख्योऽधिकारः (६२-१५)
सर्वज्ञात्मगुरुमते ब्रह्मसाक्षात्कारमात्रेण सविलासाऽ-
ज्ञाननिवृत्तिः ... (१०७-६)
साक्षात्कारः ... ४-१७ (६८-१६)
साक्षिणोऽज्ञानानावृतत्वसाधनम् राहुवदविद्या स्वा-
वृतप्रकाशप्रकाश्या ... (३४-८)
साक्षिस्वरूपनिरूपणम् ... (३१-२३)
साक्षी ... (३२-१ (३३-२) (३३-१६)
साक्ष्यानन्दस्याऽनावृतत्वनिरूपणम् (३४-१७)
सिद्धान्तमुक्तावलीमते मायाया एवोपादानत्वम् (१३-१६)
सृष्टिकल्पकनिरूपणम् । पूर्वपूर्वाविद्योपहितस्योत्त-
रोत्तराऽविद्याकल्पकत्वम् ... (७१-३)
स्वतोऽपरोक्षस्याहङ्कारानवच्छिन्नचैतन्यस्य स्वाप्नप्रप
ञ्चाधिष्ठानत्वम् ... (६८-३)
स्वाप्नपदार्थाधिष्ठाननिरूपणम् ... (६६-७)
स्वाप्नपदार्थानुभवप्रकारनिरूपणम् (६६-३)
स्वाप्नप्रपञ्चः ... १२-११।
स्वाप्नप्रपञ्चस्य ब्रह्मज्ञानेतरज्ञानबाध्यतया प्राति-
भासिकत्वम् ... (६६-१२)
संक्षेपशारीरकमते अविद्यायां चित्प्रतिबिम्ब ईश्वरः
अन्तःकरणे चित्प्रतिबिम्बो जीवः (१४-६)
संक्षेपशारीरकमते काम्यानामपि विद्योपयोगित्वम् (८७-१६)
संक्षेपशारीरकमते प्रत्यक्षस्य घटादिगतसत्त्वग्राहकत्वे
ऽपि तत्त्वावेदकत्वरूपप्रामाण्याभावेन श्रौताद्वै-
तबाधकत्वाभावः ... (५०-१७)
संक्षेपशारीरकानुसारिमते पुरुषापराधनिवृत्त्यर्थत्वेन
नियमविधिः ... (७-१)

# प्रथमपरिच्छेदः

अधिगतभिदा पूर्वाचार्यानुपेत्य सहस्रधा
सरिदिव महीभेदान् संप्राप्य शौरिपदोद्गता ।
जयति भगवत्पादश्रीमन्मुखाम्बुजनिर्गता
जननहरिणी सूक्तिर्ब्रह्माद्वयैकपरायणा ॥ १ ॥

प्राचीनैर्व्यवहारसिद्धिविषयेष्वात्मैक्यसिद्धौ परं
संनह्यद्भिरनादरात् सरणयो नानाविधा दर्शिताः ।
तन्मूलानिह संग्रहेण कति चित् सिद्धान्तभेदान् धियः
शुद्ध्यै संकलयामि तातचरणव्याख्यावचःख्यापितान् ॥ २ ॥

तेषूपपादनापेक्षान् पक्षान् प्रायो यथामति ।
युक्त्योपपादयन्नेव लिखाम्यनतिविस्तरान् * ॥ ३ ॥

तत्र तावत् आत्मा वा अरे द्रष्टव्यः श्रोतव्य इत्यधीतसाङ्गस्वाध्यायस्य † वेदान्तैरापातप्रतिपन्ने ब्रह्मात्मनि समुदितजिज्ञासस्य तज्ज्ञानाय वेदान्तश्रवणे विधिः प्रतीयमानः किंविध इति चिन्त्यते ॥

त्रिस्रः खलु विधेर्विधाः अपूर्वविधिर्नियमविधिः परिसंख्याविधिश्चेति। तत्र कालत्रये ऽपि कथमप्यप्राप्तस्य प्राप्तिफलको विधिराद्यः यथा व्रीहीन् प्रोक्षतीति । नात्र व्रीहीणां प्रोक्षणस्य संस्कारकर्मणो विना नियोगं ‡ मानान्तरेण कथमपि प्राप्तिरस्ति ॥

पक्षे प्राप्तस्याप्राप्तांशपरिपूरणो विधिर्द्वितीयः । यथा व्रीहीनवहन्तीति अत्र विध्यभावे ऽपि पुरोडाशप्रकृतिद्रव्याणां § तण्डुलनिष्पत्त्याक्षेपादेवावहननप्राप्तिर्भविष्यतीति न तत्प्राप्त्यर्थो विधिः किं त्वाक्षेपादवहननप्राप्तौ तद्वदेव लोकाव-

* अनतिविस्तरमिति द्रा॰ ४ पा॰ ।

† अधीतवेदस्यापि शिक्षाकल्पव्याकरणादीनां वेदाङ्गानामध्ययनाभावे सति व्युत्पत्तेरनुदयाज्जिज्ञासाहेतूभूतापातप्रतिपत्तिरपि न संभवेदित्यभिप्रेत्याधीतसाङ्गस्वाध्यायस्येत्युक्तम् । टी॰

‡ नियोगं विधायकशब्दमित्यर्थः । टी॰

§ व्रीहीणामित्यधिकं द्रा॰ ।

गतकारणत्वाविशेषान्नखविदलनादिरपि पक्षे प्राप्नुयादित्यवहननाप्राप्तांशसंभवात् तदंशपरिपूरणफलः ॥

* द्वयोः शेषिणोरेकस्य शेषस्य वा एकस्मिन् शेषिणि द्वयोः शेषयोर्वा नित्यप्राप्तौ शेष्यन्तरस्य शेषान्तरस्य वा निवृत्तिफलको विधिस्तृतीयः यथा अग्निचयने इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्त इति । यथा वा चातुर्मास्यान्तर्गतेष्टिविशेषे गृहमेधीये आज्यभागौ यजतीति । अग्निचयने ऽश्वरशनाग्रहणं गर्दभरशनाग्रहणं चेति द्वयमनुष्ठेयम् । तत्राश्वरशनाग्रहणे इमामगृभ्णन्निति मन्त्रो लिङ्गादेव रशनाग्रहणप्रकाशनसामर्थ्यरूपान्नित्यं प्राप्नोतीति न तत्प्राप्त्यर्थस्तदप्राप्तांशपरिपूरणार्थो वा विधिः किं तु लिङ्गाविशेषाद्गर्दभरशनाग्रहणे ऽपि मन्त्रः प्राप्नुयादिति तन्निवृत्त्यर्थः । तथा गृहमेधीयस्य दर्शपूर्णमासप्रकृतिकत्वादतिदेशादेवाज्यभागौ नित्यं प्राप्त इति न तत्र विधिस्तत्प्राप्त्यर्थस्तन्नियमार्थो वा किं त्वतिदेशात् प्रयाजादिकमपि प्राप्नुयादिति तन्निवृत्त्यर्थः । गृहमेधीयाधिकरणपूर्वपक्षरीत्येदमुदाहरणं यत्र क्व चिदुदाहर्तव्यमित्युदाहृतम् ॥

न च नियमविधावपि पक्षप्राप्तावहननस्याप्राप्तांशपरिपूरणे कृते तदवरुद्धत्वात् पाक्षिकसाधनान्तरस्य नखविदलनादेर्निवृत्तिरपि लभ्यत इतीत निवृत्तिफलकत्वाविशेषान्नियमपरिसंख्ययोः फलतो विवेको न युक्त इति शङ्क्यम् । विधितो ऽवहनननियमं विना ऽप्युपलभ्यस्य नखविदलनादेर्निवर्तयितुमशक्यतया ऽप्राप्तांशपरिपूरणरूपस्य नियमस्य प्राथम्याद्विधेयावहननगतत्वे प्रत्यासन्नत्वाच्च तस्यैव नियमविधिफलत्वोपगमात् तदनुनिष्पादिन्या अविधेयगतत्वेन विप्रकृष्टाया इतरनिवृत्तेः संनिकृष्टफलसम्भवे फलत्वानौचित्यात्

एवं विविक्तासु तिसृषु विधेर्विधासु किंविधः श्रवणविधिराश्रीयते प्रकटार्थकारादयः के चिदाहुः । अपूर्वविधिरयम् अप्राप्तत्वात् । न हि वेदान्तश्रवणं ब्रह्मसाक्षात्कारे हेतुरित्यत्रान्वयव्यतिरेकप्रमाणमस्ति लोके कृतश्रवणस्यापि बहुशस्तदनुत्पत्तेः अकृतश्रवणस्यापि गर्भगतस्य वामदेवस्य तदुत्पत्तेरुभयतो व्यभिचारात् । न वा श्रवणमात्रं श्रोतव्यार्थसाक्षात्कारहेतुरिति शास

* द्वयोः शेषिणोरेकस्य शेषस्य नित्यप्राप्तौ शेष्यन्तरनिवृत्तिफलकः एकस्मिन् शेषिणि द्वयोः शेषयोर्नित्यप्राप्तौ शेषान्तरस्य निवृत्तिफलको वा विधिस्तृतीय इति योजना । टी॰ शेष उपकारकः शेष्युपकार्यः । शेषः परार्थत्वात् । जै॰ सू॰ अ॰ ३ । पा॰ १ सू॰ २ ।

न्तरे * गृहीतः सामान्यनियमो ऽस्ति येनाच विशिष्य हेतुत्वग्राहकाभावे ऽपि सामान्यमुखेनैव हेतुत्वं प्राप्यत इति शङ्केत † गान्धर्वादिशास्त्रश्रवणस्य षड्जादिसाक्षात्कारहेतुत्वाभ्युपगमे ऽपि कर्मकाण्डादिश्रवणात् तदर्थधर्मादिसाक्षात्कारादर्शनेन व्यभिचारात् । तस्मादपूर्वविधिरेवायम् । भाष्ये ऽपि "सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवद्" ‡ इत्यधिकरणे "विद्यासहकारिणो मौनस्य § बाल्यपाण्डित्यवद्विधिरेवाश्रयितव्यो ऽपूर्वत्वादिति पाण्डित्यशब्दिते || श्रवणे ऽपूर्वविधिरेवाङ्गीकृत इति ॥

वेदान्तश्रवणस्य नित्यापरोक्षब्रह्मसाक्षात्कारहेतुत्वं नाप्राप्तम् अपरोक्षवस्तुविषयप्रमाणत्वावच्छेदेन साक्षात्कारहेतुत्वप्राप्तेः शाब्दापरोक्षवादे व्यवस्थापनात् । तदर्थमेव हि तत्प्रस्तावः । न च तावता ब्रह्मप्रमाणत्वेनापातदर्शनसाधारणब्रह्मसाक्षात्कारहेतुत्वप्राप्तावप्यविद्यानिवृत्त्यर्थमिष्यमाणसत्तानिश्चयरूपतत्साक्षात्कारहेतुत्वं श्रवणस्य न प्राप्तमिति वाच्यम् । विचारमात्रस्य विचार्यमात्रनिर्णयहेतुत्वस्य ¶ ब्रह्मप्रमाणस्य तत्साक्षात्कारहेतुत्वस्य च प्राप्त्या विचारितवेदान्तशब्दज्ञानरूपस्य श्रवणस्य तद्धेतुत्वप्राप्तेः । न चोक्त उभयतो व्यभिचारः सहकारिवैकल्येनान्वयव्यभिचारस्यादोषत्वात् । जातिस्मरस्य जन्मान्तरश्रवणात्फलसम्भवेन व्यतिरेकव्यभिचाराभावात् । अन्यथा व्यभिचारेण हेतुत्वबाधे श्रुत्यापि तत्साधनताज्ञानासम्भवात् । घटसाक्षात्कारे चक्षुरतिरेकेण त्वगिन्द्रियमिव ब्रह्मसाक्षात्कारे श्रवणातिरेकेणोपायान्तरमस्तीतिशङ्कायां व्यतिरेकव्यभिचारस्याप्यदोषत्वाच्च । तथा च प्राप्तत्वान्नापूर्वविधिः । अत एवावृत्तिरसकृदुपदेशाद् ** इत्यधिकरणभाष्ये दर्शनपर्यवसानानि हि श्रवणादीन्यावर्तमानानि दृष्टार्थानि भवन्ति यथा ऽवघातादीनि तण्डुलनिष्पत्त्यवसानानीति श्रवणस्य ब्रह्मदर्शनार्थस्य दृष्टार्थतया दार्शपूर्णमासिकावघातन्यायप्राप्तावावृत्त्युपदेशः । अपूर्वविधित्वे तु स न युज्यते सर्वेषामवधाऽव-

---

* शास्त्रान्तरश्रवणे इति द्रा॰ पा॰ ।

† शङ्क्तेतेति ४ पु॰ पाठः ।

‡ व्या॰ सू॰ अ॰ ३॰ पा॰ ४ सू॰ ४७ ।

§ मननस्येति पु॰ पा॰ ।

|| शब्दशब्दिते इति द्रा॰ पा॰ ।

¶ मात्रेति द्रा॰ पु॰ नास्ति ।

** व्या॰ सू॰ अ॰ ४ पा॰ १ सू॰ १ ।

घातवत् । अग्निचयने सर्वौषधस्य पूरयित्वा ऽवहन्त्यथैतदुपदधातीत्युपधेयो-लूखलसंस्कारार्थत्वेन विहितस्यावघातस्य दृष्टार्थत्वाभावान्नावृत्तिरिति तन्त्र-लक्षणे * स्थितम् । अतो नियमविधिरेवायम् । तदभावे हि यथा वस्तु किं चिच्चक्षुषा वीक्षमाणस्तच्च स्वागृहीते सूक्ष्मे विशेषान्तरे केन चित्कथिते तदवगमाय तस्यैव चक्षुषः पुनरपि सप्रणिधानं व्यापारे प्रवर्तते एवं मनसा ऽहमिति गृह्यमाणे जीवे वेदान्तैरध्ययनगृहीतैरुपदिष्टं निर्विशेषब्रह्मचैतन्यरू-पत्वमाकर्ण्य तदवगमाय तत्र सावधानं मनस एव निधाने कदा चित्पुरुषः प्रवर्तेतेति वेदान्तश्रवणे प्रवृत्तिः पाक्षिकी स्यात् । अप्राप्य मनसा सहेति † तु मनसैवानुद्रष्टव्यं दृश्यते त्वग्र्यया बुद्ध्येत्यपि श्रवणेना ऽनवहितमनोवि-षयेति शङ्कासम्भवात् ॥

अथ वा जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक ‡ इत्यादिश्रवणाद्भिन्नात्मज्ञानान्मुक्तिरिति भ्रमसम्भवेन मुक्तिसाधनज्ञानाय भिन्ना-त्मविचाररूपशास्त्रान्तरश्रवणेऽपि पक्षे प्रवृत्तिः स्यादित्यद्वितीयात्मपरवेदान्त-श्रवणनियमविधिरस्तु । इहात्मशब्दस्येदं सर्वं यदयमात्मेत्यादिप्रकरणपर्या-लोचनया ऽद्वितीयात्मपरत्वात् । न हि वस्तुसत्साधनान्तरप्राप्तावेव नियम-विधिरिति कुलधर्मः । येन § वेदान्तश्रवणनियमार्थवत्त्वाय नियमादृष्टजन्यस्वप्र-तिबन्धककल्मषनिवृत्तिद्वारा सत्तानिश्चयरूप § ब्रह्मसाक्षात्कारस्य वेदान्तश्रव-णैकसाध्यत्वस्याभ्युपगन्तव्यत्वेन तत्र वस्तुतः साधनान्तराभावान्न नियम-विधिर्युज्यते इति आशङ्क्येत किं तु यत्र साधनान्तरतया सम्भावनया ‖ पक्षे प्राप्त्या विधित्सितसाधनस्य पाक्षिक्यप्राप्तिर्निवारयितुं न शक्यते तत्र नियम-विधिः । तावतैवा ऽप्राप्तांशपरिपूरणस्य तत्फलस्य सिद्धेः ॥

अथ वा गुरुमुखाधीनाध्ययनादिव ¶ निपुणस्य स्वप्रयत्नमात्रसाध्या-दपि वेदान्तविचारात् संभवति सत्तानिश्चयरूपं ब्रह्मापरोक्षज्ञानं किं तु गुरुमु

* तन्त्रलक्षणमेकादशाध्यायः । टी॰

† श्रुतिरिति द्वा॰ पुस्तकेऽधिकम् श्रुतिस्त्विति २-३ पुस्तकयोः ।

‡ श्रुतावन्यं यदा पश्यतीति जीवभिन्नात्मज्ञानस्य मोक्षहेतुताश्रवणाद्भ्रमसंभव इति भावः । निरासद्वारेत्यर्थः । टी॰

§ § एतन्मध्यस्थं ४ पु॰ नास्ति ।

‖ संभाव्यमानस्येति पाठान्तरम् ।

¶ अध्ययनेति द्वा॰ नास्ति॰

स्वाधीनवेदान्तवाक्यश्रवणनियमाऽदृष्टमविद्यानिवृत्तिं प्रति कल्मषनिरासेनोपयुज्यतइति तदभावेन * प्रतिबद्धमविद्यामनिवर्तयत् परोक्षकल्प † मवतिष्ठते । न च ज्ञानोदये ऽज्ञानाऽनिवृत्त्यनुपपत्तिः । प्रतिबन्धकाभावस्य सर्वत्रापेक्षितत्वेन सत्यपि प्रत्यक्षविशेषदर्शने उपाधिना प्रतिबन्धात्प्रतिबिम्बरूप ‡ भ्रमाऽनिवृत्तिवत्तदनिवृत्त्युपपत्तेः § । एवं च लिखितपाठादिनापि स्वाध्यायग्रहणप्रसक्तौ गुरुमुखाधीनाध्ययननियमविधिवत्स्वप्रयत्नमात्रपूर्वकस्यापि वेदान्तविचारस्य सत्तानिश्चयरूपब्रह्मसाक्षात्कारार्थत्वेन पक्षे प्राप्तौ गुरुमुखाधीनश्रवणनियमविधिरयमस्तु ।

न च तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदिति गुरूपसदनविधिनैव गुरुरहितविचारव्यावृत्तिसिद्धेर्विफलो नियमविधिरिति शङ्क्यम् । गुरूपसदनस्य श्रवणाङ्गतया श्रवणविध्यभावे तद्विधिरेव नास्तीति तेन तस्य वैफल्याप्रसक्तेः । अन्यथा ऽध्ययनाङ्गभूतोपगमविधिनैव लिखितपाठादिव्यावृत्तिरित्यध्ययननियमोपि विफलः स्यात् ॥

अथ वा ऽद्वैतात्मपरभाषाप्रबन्धस्य श्रवणस्य पक्षे प्राप्त्या वेदान्तश्रवणनियमविधिरस्तु । न च न म्लेच्छितवाइत्यादिनिषेधादेव तदप्राप्तिः शास्त्रव्युत्पत्तिमान्द्याद्वेदान्तश्रवणमशक्यमिति पुरुषार्थनिषेधमुल्लङ्घ्यापि भाषाप्रबन्धेनाद्वैतं जिज्ञासमानस्य तत्रापि प्रवृत्तिसम्भवेन नियमविधेरर्थवत्त्वोपपत्तेः । अभ्युपगम्यते हि || क्रत्वधिकरणे व्युत्पादितं पुरुषार्थे ऽनृतवदननिषेधे सत्यपि दर्शपूर्णमासमध्ये कुतश्चिद्धेतोरङ्गीकृततन्निषेधोल्लङ्घनस्या ऽविकलां क्रतुसिद्धिं कामयमानस्या ऽनृतवदने प्रवृत्तिः स्यादिति पुनः क्रत्वर्थतया दर्शपूर्णमासप्रकरणे 'ना ऽनृतं वदेदिति निषेध इति क्रत्वर्थतया निषेधस्यार्थवत्त्वम् ॥

यद्वा यथा 'मन्त्रैरेव मन्त्रार्थस्मृतिः साध्येति नियमस्तन्मूलकल्पसूत्रात्मीयग्रहणकवाक्यादीनामपि ¶ पक्षे प्राप्तिस्तथा वेदान्तमूलेतिहासपुराणपौरुषेयप्रबन्धानामपि पक्षे प्राप्तिसम्भवान्नियमोयमस्तु ॥

---

* तदभावेन अदृष्टाभावेन ।

† परोक्षज्ञानकल्पमिति द्रा· पाठः ।

‡ रूपेति द्रा· १ पुस्तकयोर्नास्ति ।

§ तदर्थं श्रवणनियम इत्यधिकं द्रा· पुस्तके ।

|| वक्ष्यमाणरीत्या व्युत्पादितमर्थवत्त्वमभ्युपगम्यतइति योजना ।

¶ मन्त्रमूलकानां कल्पसूत्राणामात्मीयानां ग्रहणकवाक्यानां देवतास्वरूपप्रतिपादकश्लोकादीनां चेत्यर्थः ।

सर्वथा नियमविधिरेवायम् । सहकार्य्यन्तरविधिरित्यधिकरणभाष्ये अपूर्वविधित्वोक्तिस्तु * नियमविधित्वेपि पाक्षिकाप्राप्तिसद्भावात्तदभिप्रायेति तत्रैव पक्षेणेति पाक्षिकाप्राप्तिकथनपरसूत्रपदयोजनेन स्पष्टीकृतमिति विवरणानुसारिणः ॥

कृतश्रवणस्य प्रथमं शब्दात् निर्विचिकित्सं † परोक्षज्ञानमेवोत्पद्यते शब्दस्य परोक्षज्ञानजननस्वाभाव्येन क्लृप्तसामर्थ्याऽनतिलङ्घनात् । पश्चात् कृतमनननिदिध्यासनस्य सहकारिविशेषसम्पन्नात्तत ‡ एवाऽपरोक्षज्ञानं जायते तत्तांशगोचरज्ञानासमर्थस्या § पीन्द्रियस्य तत्समर्थसंस्कारसाहित्यात्प्रत्यभिज्ञानजनकत्ववत्स्वतो ऽपरोक्षज्ञानजननाऽसमर्थस्यापि शब्दस्य विधुरपरिभावितकामिनीसाक्षात्कारस्थले तत्समर्थत्वेन क्लृप्तभावनाप्रचयसाहित्यादपरोक्षज्ञानजनकत्वं युक्तं ततश्च शब्दस्य स्वतः स्वविषये परोक्षज्ञानजनकत्वस्य भावनाप्रचयसहकृतज्ञानकरणत्वावच्छेदेन विधुरान्तःकरणवदपरोक्षज्ञानजनकत्वस्य च प्राप्तत्वात्पूर्ववन्नियमविधिरिति तदेकदेशिनः ॥

वेदान्तश्रवणेन न ब्रह्मसाक्षात्कारः किं तु मनसैव सः मनसैवानुद्रष्टव्यमिति श्रुतेः । शास्त्राचार्योपदेशशमादिसंस्कृतमन आत्मदर्शने करणमिति गीताभाष्यवचनाच्च । श्रवणं तु निर्विचिकित्सपरोक्षज्ञानार्थमिति तादर्थ्येनैव नियमविधिरिति केचित् ॥

अपरोक्षज्ञानार्थत्वेनैव श्रवणे नियमविधिः द्रष्टव्य इति फलकीर्त्तनात् तादर्थ्यं च तस्य करणभूतमनःसहकारितयैव न साक्षात् ‖ शब्दादपरोक्षज्ञानानङ्गीकारात् । न च तस्य तेन रूपेण तादर्थ्यं न प्राप्तमित्यपूर्वविधित्वप्रसङ्गः श्रावणेषु षड्जादिषु समारोपितपरस्पराऽविवेकनिवृत्त्यर्थं ¶ गान्धर्वशास्त्रस्य श्रवणसहकृतश्रोत्रेण परस्परासंकीर्णतद्याथार्थ्यापरोक्षदर्शनेन प्रकाशमाने वस्तुन्यारोपिताऽविवेकनिवृत्त्यर्थशास्त्रसद्भावे तच्छ्रवणं तत्साक्षात्कारजनकेन्द्रियसहकारिभावेनोपयुज्यतइत्यस्य क्लृप्तत्वादित्येके ॥

* अपूर्वत्वोक्तिस्त्विति द्वा० पाठः ।
† निर्विचिकित्सं संशयानास्कन्दितम् ।
‡ ततः श्रवणात् ।
§ ज्ञानजननासमर्थस्येति द्वा० पाठः ।
‖ न साक्षादिति द्वा० पुस्तके नास्ति ।
¶ परस्परमविवेको नाम परस्परं तादात्म्यरूपः परस्परधर्मवत्तारूपश्चेति बोध्यम् । टी०

वेदान्तवाक्यानामद्वितीये ब्रह्मणि तात्पर्यनिर्णयानुकूलन्यायविचारात्मकचेतोवृत्तिविशेषरूपस्य श्रवणस्य न ब्रह्मणि परोक्षमपरोक्षं वा ज्ञानं फलं तस्य शब्दादिप्रमाणफलत्वात् । न चोक्तरूपविचाराऽवधारिततात्पर्यविशिष्टशाब्दज्ञानमेव श्रवणमस्तु तस्य ब्रह्मज्ञानं फलं युज्यते इति वाच्यम् । ज्ञाने विध्यनुपपत्तेः । श्रवणविधेर्विचारकर्तव्यताविधायकजिज्ञासासूत्रमूलत्वोपगमान्नोहापोहात्मक * मानसक्रियारूपविचारस्यैव श्रवणत्वौचित्यात् । न च विचारस्यैव तात्पर्यनिर्णयद्वारा तज्जन्यतात्पर्यभ्रमादिपुरुषापराधरूपप्रतिबन्धविगमद्वारा वा ब्रह्मज्ञानं फलमस्त्विति वाच्यम् । तात्पर्यज्ञानस्य † शाब्दज्ञाने कारणत्वानुपगमात् कार्ये क्वचिदपि प्रतिबन्धकाभावस्य कारणत्वाऽनुपगमाच्च तयो ‡ द्वारत्वानुपपत्तेः । ब्रह्मज्ञानस्य विचाररूपातिरिक्तकारणजन्यत्वेन तत्प्रामाण्यस्य परतस्त्वापत्तेश्च § । तस्मात्तात्पर्यनिर्णयद्वारा पुरुषापराधनिरासार्थत्वेनैव विचाररूपे श्रवणे नियमविधिः । द्रष्टव्यः इति तु दर्शनार्हत्वेन स्तुतिमात्रं न श्रवणफलकीर्तनमिति संक्षेपशारीरकानुसारिणः ॥

ब्रह्मज्ञानार्थं वेदान्तश्रवणे प्रवृत्तस्य चिकित्साज्ञानार्थं चरकसुश्रुतादिग्रन्थश्रवणे प्रवृत्तस्येव मध्ये मध्ये व्यापारान्तरे ऽपि प्रवृत्तिः प्रसज्यतइति तन्निवृत्तिफलकः श्रोतव्य इति परिसंख्याविधिः । ब्रह्मसंस्थो ऽमृतत्वमेतीति छान्दोग्ये ऽनन्यव्यापारत्वस्य मुक्त्युपायत्वाऽवधारणात् । संपूर्वस्य तिष्ठतेः समाप्तिवाचितया ब्रह्मसंस्थाशब्दिताया ब्रह्मणि समाप्तेरनन्यव्यापारत्वरूपत्वात् । तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथेत्याथर्वणे कण्ठत एव व्यापारान्तरप्रतिषेधाच्च । आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तयेत्यादिस्मृतेश्च । न च ब्रह्मज्ञानानुपयोगिनो व्यापारान्तरस्य श्रवणेन सहैकस्मिन्साध्ये समुच्चित्य प्राप्त्यभावान्न तन्निवृत्त्यर्थः परिसंख्याविधिर्युज्यतइति वाच्यम् । सहकार्यन्तरविधिरित्यादिसूत्रे यस्मात् पक्षे भेददर्शनप्राबल्यान्न प्राप्नोति तस्मान्नियमविधिरिति तद्भाष्ये च कृतश्रवणस्य शाब्दज्ञानमात्रात्कृतकृत्यतां मन्वानस्याविद्यानिवर्तकसाक्षात्कारोपयोगिनिदिध्यासने प्रवृत्तिर्न स्यादिति अतत्सा-

* न्यायाभासेभ्यो निष्कृष्य न्यायानामुपादानमूहः । न्यायाभासनिराकरणमपोहः । टी॰

† प्रतिबन्धनिरासोपजननेनान्यथासिद्धत्वादिति भावः । टी॰

‡ तयोः तात्पर्यनिर्णयप्रतिबन्धविगमयोः ।

§ प्रामाण्याश्रयज्ञानस्यातिरिक्तकारणजन्यत्वरूपं प्रामाण्यस्योत्पत्तौ परतस्त्वं स्यादित्यर्थः । टी॰

धनपक्षप्राप्तिमात्रेण निदिध्यासने नियमविधेरभ्युपगततया तन्न्यायेनासाधनस्य समुच्चित्य प्राप्तावपि तन्निवृत्तिफलकस्य परिसंख्याविधेः संभवादिति ।

नियमः परिसङ्ख्या वा विध्यर्थोऽत्र भवेद्यतः ।
अनात्माऽदर्शनेनैव परात्मानमुपास्महे ॥
इति * वार्त्तिकवचनानुसारिणः के चिदाहुः ॥

आत्मा श्रोतव्य इति मननादिवदात्मविषयकत्वेन निबध्यमानं श्रवणमागमाचार्योपदेशजमात्मज्ञानमेव न तु तात्पर्यविचाररूपं न तत्र कोपि विधिः । अत एव समन्वयसूत्रे आत्मज्ञानविधिनिराकरणानन्तरं भाष्यं किमर्थानि तर्हि 'आत्मा वा अरे द्रष्टव्य इत्यादीनि वचनानि विधिच्छायानि स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूम इत्यादि । यदि च वेदान्ततात्पर्यविचाररूपं श्रवणं तदा तस्य तात्पर्यनिर्णयद्वारा वेदान्ततात्पर्यभ्रमसंशयरूपप्रतिबन्धकनिरास एव फलं न प्रतिबन्धकान्तरनिरासो ब्रह्मावगमो वा । तत्फलकत्वं च तस्य लोकत एव प्राप्तं साधनान्तरं च किं चिद्विकल्प्य समुच्चित्य वा न प्राप्तमिति न तत्र विधित्रयस्याप्यवकाशः । विचारविध्यभावेपि विज्ञानार्थतया विधीयमानं गुरूपसदनं दृष्टद्वारसंभवे ऽदृष्टकल्पनाऽयोगाद् गुरुमुखाधीनवेदान्तविचारद्वारैव विज्ञानार्थे पर्यवस्यतीति । अत एव स्वप्रयत्नसाध्यविचारव्यावृत्तिः । अध्ययनविध्यभावे तूपगमनं विधीयमानमक्षरावाप्त्यर्थत्वेनाऽविधीयमानत्वान्न तदर्थं गुरुमुखोच्चारणानूच्चारणमध्ययनं द्वारीकरोतीति लिखितपाठादिव्यावृत्त्यसिद्धेः सफलो ऽध्ययननियमविधिः । न च तात्पर्यादिभ्रमनिरासाय वेदान्तविचारार्थिनः कदा चिद् द्वैतशास्त्रेपि प्रवृत्तिः स्यात् तत्रापि तदभिमतयोजनया वेदान्तविचारसत्त्वादित्यद्वैतात्मपरवेदान्तविचारनियमविधिरर्थवानिति वाच्यम् । स्वयमेव तात्पर्यभ्रमहेतोस्तस्य तन्निरासकत्वाभावेन † साधनान्तरप्राप्त्यभावात् । तन्निरासकत्वभ्रमेण तत्रापि कस्य चित्प्रवृत्तिः स्यादित्येतावता श्रोतव्य इति नियमविधेरभ्युपगम इत्यपि न । ईश्वरानुग्रहफलाद्वैतश्रद्धारहितस्य श्रोतव्यवाक्येपि पराभिमतयोजनया सद्वितीयात्मविचारविधिपरत्वभ्रमसम्भवेन भ्रमप्रयुक्ताया अन्यत्र प्रवृत्तेर्विधिशतेनाप्यपरिहार्यत्वात् ।

* अत्र श्रोतव्य इति वाक्ये विध्यर्थो नियमो भवेत् परिसंख्या वा । यतः अन्यव्यापारराहित्येन परमात्मोपासने वयं प्रवृत्ता इति श्लोकार्थः ।

† तस्य द्वैतशास्त्रस्य तन्निरासकत्वाभावेन भ्रमनिरासकत्वाभावेन ।

न च व्यापारान्तरनिवृत्त्यर्थो परिसंख्येति युक्तम् * । असंन्यासिनो व्यापारान्तरनिवृत्तेरशक्यत्वात् । संन्यासिनस्तन्निवृत्तेर्ब्रह्मसंस्थया सह संन्यासविधायकेन ब्रह्मसंस्थो ऽमृतत्वमेतीति श्रुत्यन्तरेण सिद्धतया संन्यासविधायकश्रुत्यन्तरमपेक्ष्य श्रोतव्यवाक्येन तस्य व्यापारान्तरनिवृत्त्युपदेशस्य † व्यर्थत्वात् । न च विचारविध्यसंभवेपि विचारविषयवेदान्तनियमविधिः संभवति भाषाप्रबन्धादिव्यावर्त्यसत्त्वादिति शङ्क्यम् †† । सन्निधानादेव वेदान्तनियमस्य लब्धत्वेन विधिविषयत्वायोगात् †† । स्वाध्यायो ऽध्येतव्य इत्यर्थावबोधनार्थनियमविधिबलादेवाध्ययनगृहीतवेदोत्पादितं § वेदार्थज्ञानं फलपर्यवसायि न कारणान्तरोत्पादितमित्यस्यार्थस्य लब्धत्वेन वेदार्थे ब्रह्मणि मोक्षाय ज्ञातव्ये भाषाप्रबन्धादीनामप्राप्तेः || । न च सहकार्यन्तरविधिरित्यधिकरणे बाल्यपाण्डित्यमौनशब्दितेषु श्रवणमनननिदिध्यासनेषु विधिरभ्युपगत इति वाच्यम् । विचारे विचार्यतात्पर्यनिर्णयहेतुत्वस्य वस्तुसिद्ध्यनुकूलयुक्त्यनुसन्धानरूपे मनने तत्प्रत्ययाभ्यासरूपे निदिध्यासने च वस्त्ववगमवैशद्यहेतुत्वस्य ¶ च लोकसिद्धत्वेन तेषु विध्यनपेक्षणात् । विधिच्छायार्थवादस्येव प्रशंसाद्वारा प्रवृत्त्यतिशयकरत्वमात्रेण तत्र विधित्वव्यवहारात् । एवं च श्रवणविध्यभावात्कर्मकाण्डविचारवद् ब्रह्मकाण्डविचारोप्यध्ययनविधिमूल इत्याचार्यवाचस्पतिपक्षानुसारिणः ॥

विचार्यस्य च ब्रह्मणो ** जगज्जन्मस्थितिलयकारणत्वं लक्षणमुक्तं यतो वा इमानि भूतानि जायन्त इत्यादिश्रुत्या । जगज्जन्मस्थितिलयेष्वेकैककारणत्वमप्यनन्यगामित्वात् लक्षणं भवितुमर्हतीति चेत् सत्यं लक्षणत्रयमेवेदं परस्परनिरपेक्षम् । अत एवाऽत्ता चराचरग्रहणा ‡‡ दित्याद्यधिकरणेषु सर्वसंहर्तृत्वादिकं प्रत्येकं ब्रह्मलिङ्गतयोपन्यस्तमिति कौमुदीकारः ॥

अन्ये तु जन्मकारणत्वस्य स्थितिकारणत्वस्य च निमित्तकारणसाधारण्यादुपादानत्वप्रत्यायनाय प्रपञ्चस्य ब्रह्मणि लयो दर्शितः । अस्तु ब्रह्म

* वाच्यमिति द्रा॰ पाठः ।

† व्यापारनिवृत्तीति २ पुस्तके ।	†† एतन्मध्यस्थं चतुर्थपुस्तके नास्ति ।

§ अध्ययनबोधितेति द्रा॰ पाठः ।

|| अप्राप्तेश्चेति द्रा॰ २ पुस्तकयोः ।

¶ वैशद्यमबाधितत्वम् ।

** श्रोतव्यवाक्यार्थविचारेण प्रथमसूत्रार्थः संगृहीतः । क्रमप्राप्तं द्वितीयसूत्रार्थं संगृह्णाति । टी॰

‡‡ व्या॰ सू॰ अ॰ १ पा॰ २ सू॰ ९ ।

जगदुपादानं तज्जन्मनि घटजन्मनि कुलालवत्तत्स्थितौ राज्यस्थेम्नि राजवच्चोपादानादन्यदेव निमित्तं भविष्यतीति शङ्काव्यवच्छेदाय तस्यैव जगज्जन्मजीवननियामकत्वमुक्तम् । तथा चैकमेवेदं लक्षणमभिन्ननिमित्तोपादानतयाऽद्वितीयं ब्रह्मोपलक्षयतीत्याहुः ॥

(३) ब्रह्मणश्चोपादानत्वमद्वितीयकूटस्थचैतन्यरूपस्य न परमाणूनामिवारम्भकत्वरूपं न वा प्रकृतेरिव परिणामित्वरूपं किं तु अविद्यया वियदादिप्रपञ्चरूपेण विवर्तमानत्वलक्षणम् । वस्तुनः समसत्ताकोऽन्यथाभावः परिणामः तदऽसमसत्ताको विवर्त इति वा * कारणसलक्षणो ऽन्यथाभावः परिणामः तद्विलक्षणो विवर्त इति वा † कारणाऽभिन्नं कार्यं परिणामः तदभेदं विनैव तद्व्यतिरेकेण दुर्वचं कार्यं विवर्त इति ‡ वा विवर्तपरिणामयोर्विवेकः ॥

(४) अथ शुद्धं ब्रह्मोपादानमिष्यते ईश्वररूपं जीवरूपं वा । अत्र संक्षेपशारीरकानुसारिणः के चिदाहुः । शुद्धमेवोपादानं जन्मादिसूत्रतद्भाष्ययोरुपादानत्वस्य ज्ञेयब्रह्मलक्षणत्वोक्तेः । तथा चात्मन आकाशः संभूत इत्यादिकारणवाक्येषु शबलवाचिनामात्मादिशब्दानां शुद्धे लक्षणेवेति ॥

विवरणानुसारिणस्तु यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायतइत्यादिश्रुतेः सर्वज्ञत्वादिविशिष्टं माया-

---

* उपादानत्वाभिमतवस्तुसत्तासमानसत्ताकत्वे सति तदवस्थाविशेषरूपत्वं तत्परिणामत्वम् । विवर्तवारणाय सत्यन्तं घटस्य तन्तुपरिणामत्ववारणाय विशेष्यम् । टी॰

उपादानत्वाभिमतवस्तुसत्ताविषमसत्ताकत्वे सति तदवस्थाविशेषरूपत्वं तद्विवर्त्तत्वम् । चैतन्यस्य मद्वस्तुविवर्तत्ववारणाय विशेष्यम् । परिणामवारणाय सत्यन्तम् । टी॰

† उपादानत्वाभिमतवस्तुसलक्षणत्वे सति तदवस्थाविशेषत्वं तत्परिणामत्वम् । अत्र सालक्षण्यं जडरूपं बोध्यम् । मद्वस्तुनो घटपरिणामत्ववारणाय विशेष्यं प्रपञ्चस्य संवित्परिणामत्ववारणाय सत्यन्तम् ।

उपादानत्वाभिमतवस्तुविलक्षणत्वे सति तदवस्थाविशेषत्वं तद्विवर्त्तत्वम् । अत्र चित्त्वजडत्वरूपं वैलक्षण्यं विवक्षितम् । उपादानत्वाभिमतजडविलक्षणे चैतन्ये जडविवर्त्तत्ववारणाय विशेष्यम् । घटादौ मद्विवर्तत्ववारणाय सत्यन्तम् । टी॰

‡ कारणत्वाभिमतवस्त्वभिन्नत्वे सति तत्कार्यत्वं परिणामत्वम् । वियदादौ ब्रह्मपरिणामत्ववारणाय सत्यन्तम् । मदो घटपरिणामत्ववारणाय विशेष्यम् ।

उपादानत्वाभिमतवस्तुनः सकाशाद्वस्तुतो भेदाभेदाभ्यां दुर्निरूपत्वे सति कार्यत्वं कार्यरूपविवर्तमात्रलक्षणम् । अविद्यायामतिव्याप्तिवारणाय विशेष्यम् । आरम्भवादे उपादानादभेदेन दुर्निरूपकार्ये अतिव्याप्तिवारणाय भेदेति । परिणामवादे उपादानाद्भेदेन दुर्निरूपकार्ये ऽतिव्याप्तिवारणायाभेदेति । सिद्धान्ते कार्यकारणयोर्भेदोपगमादसंभववारणाय वस्तुत इत्युक्तम् । टी॰

शबलमीश्वररूपमेव ब्रह्मोपादानम्। अत एव भाष्येऽन्तस्तद्धर्मोपदेशात् * सर्वत्र प्रसिद्धोपदेशादि * त्याद्यधिकरणेषु सैव ऋक् तत्साम तदुक्थं तद्यजुस्तद् ब्रह्म सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरस इत्यादिश्रुत्युक्तं सर्वोपादानत्वप्रयुक्तं सर्वात्मकत्वं जीवव्यावृत्तमीश्वरलिङ्गमित्युपवर्णितम्। जीवेश्वरानुस्यूतचैतन्यमात्रस्य सर्वोपादानत्वे तु न तज्जीवव्यावृत्तमीश्वरलिङ्गं स्यात्। संक्षेपशारीरके शबलोपादानत्वनिराकरणमपि मायाविशिष्टोपादानत्वनिराकरणाभिप्रायं न तु † निष्कृष्टेश्वररूपचैतन्योपादानत्वनिराकरणपरम्। तत्रैव प्रथमाध्यायान्ते जगदुपादानत्वस्य तत्पदार्थवृत्तित्वोक्तेः। एवं चेश्वरगतमपि कारणत्वं तदनुगतमखण्डचैतन्यं शाखा चन्द्रमसमिव ‡ तटस्थतयोपलक्षयितुं शक्नोतीति तस्य ज्ञेयब्रह्मलक्षणत्वोक्तिरिति मन्यन्ते॥

वियदादिप्रपञ्च ईश्वराश्रितमायापरिणाम इति तत्रेश्वर उपादानम्। अन्तःकरणादिकं त्वीश्वराश्रितमायापरिणाममहाभूतोपसृष्टजीवाविद्याकृतभूतसूक्ष्मकार्यमिति तत्रोभयोरुपादानत्वम्। अत एव एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं यन्तीति श्रुतौ कलाशब्दवाच्यानां प्राणमनःप्रभृतीनां विदुषो विदेहकैवल्यसमये अविद्यानिवृत्त्या अविद्याकार्यांशाभिप्रायेण विद्ययोच्छेदो दर्शितः। गताः कलाः पञ्चदश प्रतिष्ठा इति श्रुत्यन्तरे तदनिवर्त्यमायाकार्यमहाभूतपरिणामरूपोपष्टम्भकांशाभिप्रायेण तेषां स्वस्वप्रकृतिषु लयो दर्शितः। इति मायाऽविद्याभेदवादिनः॥

यथा वियदादिप्रपञ्च ईश्वराश्रितमायापरिणाम इति तत्रेश्वर उपादानं तथान्तःकरणादि जीवाश्रिताऽविद्यामात्रपरिणाम इति तत्र जीव एवोपादानम्। न चान्तःकरणादौ मायाकार्यमहाभूतानामप्यनुप्रवेशे उदाहृतश्रुतिद्वयव्यवस्थानुपपत्तिः। कलानां विद्ययोच्छेदश्रुतिस्तत्त्वविद्दृष्टिविषया गताः कला इति श्रुतिस्तु म्रियमाणे § तत्त्वविदि || समीपवर्त्तिनः पुरुषा नश्यद्घटवत्त-

---

* * व्या॰ सू॰ अ॰ १ पा॰ १ सू॰ २०। व्या॰ सू॰ अ॰ १ पा॰ २ सू॰ १।

† निष्कृष्टमनुपहितम्।

‡ चन्द्रमसं शाखेव ईश्वरगतं कारणत्वं तदनुगतमखण्डचैतन्यमुपलक्षयितुं शक्नोतीति संबन्धः।

§ मायामात्रेणेति ४ पु॰ पाठः।

|| तत्त्वविदीति द्वा॰ पुस्तके नास्ति।

दीयशरीरादीनामपि भूम्यादिषु लयं मन्यन्तइति तटस्थपुरुषप्रतीतिविषयेति व्यवस्थायाः कलालया * धिकरणभाष्ये † स्पष्टत्वात् इति मायाविद्याभेदवादिष्वेकदेशिनः ॥

तदभेदवादिष्वपि के चिद्यद्यपि वियदादिप्रपञ्चस्येश्वर उपादानं तथाप्यन्तःकरणादीनां जीवतादात्म्यप्रतीतेर्जीव एवोपादानम् । अत एवाध्यासभाष्येऽन्तःकरणादीनां जीवे एवाध्यासो दर्शितः । विवरणे च प्रतिकर्मव्यवस्थायां ब्रह्मचैतन्यस्योपादानतया घटादिसङ्गित्वं जीवस्य तदसङ्गित्वेप्यन्तः-करणादिसङ्गित्वं च वर्णितमित्याहुः ॥

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च खं वायुर्ज्योतिरापश्च पृथिवी विश्वस्य धारिणीत्यादिश्रुतेः कृत्स्नस्य व्यावहारिकप्रपञ्चस्य ब्रह्मैवोपादानं जीवस्तु प्रातिभासिकस्य स्वप्नप्रपञ्चस्य च । कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वेत्यधिकरणे ‡ ब्रह्मणो जगदुपादानत्वे तस्य कार्त्स्न्येन जगदाकारेण परिणामे विकारातिरेकेण ब्रह्माऽभावो वा एकदेशेन परिणामे निरवयवत्वश्रुतिविरोधो वा प्रसज्यतइति पूर्वपक्षे आत्मनि चैवं विचित्राश्च ही § ति सूत्रेण विवर्त्तवादाभिप्रायेण स्वप्नदृशि जीवात्मनि स्वरूपानुपमर्द्देनेनानेकाकारस्वप्नप्रपञ्चसृष्टिवत् ब्रह्मणि वियदादिसृष्टिरुपपद्यतइति सिद्धान्तितत्वादित्यन्ये ॥

जीव एव स्वप्नदृष्टवत् स्वस्मिन्नीश्वरादिसर्वकल्पकत्वेन सर्वकारणमित्यपि के चित् ॥

(५) अथ मायां तु प्रकृतिं विद्यादित्यादिश्रुतेर्मायाजाड्यस्य घटादिष्वनुगमाच्च माया जगदुपादानं प्रतीयते कथं ब्रह्मोपादानम् ।

अत्राहुः पदार्थतत्त्वनिर्णयकाराः । ब्रह्म माया चेत्युभयमुपादानमित्युभयश्रुत्युपपत्तिः । सत्ताजाड्यरूपोभयधर्मानुगत्युपपत्तिश्च । तत्र ब्रह्म विवर्त्तमानतयोपादानमविद्या परिणममानतया । न च विवर्त्ताधिष्ठाने पारिभाषिकमुपादानत्वं स्वात्मनि कार्यजनिहेतुत्वस्योपादानलक्षणस्य तत्राप्यविशेषादिति ॥

---

* कलाप्रलयेति द्वा· १ पुस्तकयोः ।
† व्या· सू· अ· ४ पा· २ सू· १५ ।
‡ व्या· सू· अ· २ पा· १ सू· २६ ।
§ व्या· सू· अ· २ पा· १ सू· २८ ।

केचित्तु उक्तामेव प्रक्रियामभ्युपगम्य विवर्त्तपरिणामोपादानद्वयसाधारणमन्यल्लक्षणमाहुः। स्वाभिन्नकार्यजनकत्वमुपादानत्वम्। अस्ति च प्रपञ्चस्य सद्रूपेण ब्रह्मणा विवर्त्तमानेन जडेनाऽज्ञानेन परिणामिना चाऽभेदः सन् घटः जडो घट इति सामानाधिकरण्यानुभवात्। न च तदनन्यत्वमारम्भणशब्दादिभ्य * इति सूत्रे अनन्यत्वं व्यतिरेकेणाभावः न खलु अनन्यत्वमित्यभेदं ब्रूमः किंतु भेदं व्यासेधाम इति भाष्यभामतीनिबन्धाभ्यां प्रपञ्चस्य ब्रह्माभेदनिषेधाद्भेदाभ्युपगमे ऽपसिद्धान्त इति वाच्यम्। तयोर्ब्रह्मरूपधर्मिसमानसत्ताकाऽभेदनिषेधे तात्पर्य्येणेदंरजतयोरिव प्रातीतिकाऽभेदाभ्युपगमेपि विरोधाभावादिति ॥

संक्षेपशारीरककृतस्तु ब्रह्मैवोपादानं कूटस्थस्य स्वतः कारणत्वानुपपत्तेर्मायाद्वारा † कारणम्। अकारणमपि कार्ये ‡ ऽनुगच्छति मृद इव तद्गतश्लक्ष्णत्वादेरपि घटे ऽनुगमदर्शनादित्याहुः ॥

वाचस्पतिमिश्रास्तु जीवाश्रितमायाविषयीकृतं ब्रह्म स्वत एव जाड्याश्रयप्रपञ्चाकारेण विवर्त्तमानतयोपादानमिति माया सहकारिमात्रं न कार्य्यानुगतं द्वारकारणमित्याहुः ॥

सिद्धान्तमुक्तावलीकृतस्तु मायाशक्तिरेवोपादानं न ब्रह्म तदेतद् ब्रह्माऽपूर्वमनपरमबाह्यं न तस्य कार्य्यं करणं च विद्यते इत्यादिश्रुतेः। जगदुपादानमायाधिष्ठानत्वेन तूपचारादुपादानं तादृशमेवोपादानत्वं लक्षणे विवक्षितमित्याहुः ॥

अथ क ईश्वरः को वा जीवः। अत्रोक्तं प्रकटार्थविवरणे अनादिरनिर्वाच्या भूतप्रकृतिश्चिन्मात्रसंबन्धिनी माया तस्यां चित्प्रतिबिम्ब ईश्वरः। तस्या एव परिच्छिन्नाऽनन्तप्रदेशेष्वावरणविक्षेपशक्तिम § दविद्याभिधानेषु चित्प्रतिबिम्बो जीव इति ॥

---

* व्या॰ सू॰ अ॰ २ पा॰ १ सू॰ १४।

† करणमपि द्वारं कार्यं इति द्वा॰ पाठः।

‡ द्वःरकारणमपीति ४ पु॰ पाठः।

§ ब्रह्मचैतन्यावरणानुकूला शक्तिरावरणशक्तिः। आवरणं च ब्रह्म नास्ति न प्रकाशत इति व्यवहारयोग्यत्वम्। विक्षेपपदेन तत्तज्जीवसाधारणदुःखादिकं विवक्षितं तदनुकूला शक्तिर्विक्षेपशक्तिरित्यर्थः। टी॰

तत्त्वविवेके तु त्रिगुणात्मिकाया मूलप्रकृतेर्जीवेशावाऽऽभासेन करोति माया चाविद्या च स्वयमेव भवतीतिश्रुतिसिद्धौ द्वौ रूपभेदौ रजस्तमोऽनभिभूतशुद्धसत्त्वप्रधाना माया तदभिभूतमलिनसत्त्वा * ऽविद्येति मायाविद्याभेदं परिकल्प्य मायाप्रतिबिम्ब ईश्वरो ऽविद्याप्रतिबिम्बो जीव इत्युक्तम्। एकैव मूलप्रकृतिर्विक्षेपप्राधान्येन मायाशब्दिता ईश्वरोपाधिः आवरणप्राधान्येनाऽविद्याऽज्ञानशब्दिता जीवोपाधिः। अत एव तस्या जीवेश्वरसाधारणचिन्मात्रसंबन्धित्वेपि जीवस्यैवाऽज्ञोस्मीत्यज्ञानसंबन्धानुभवो नेश्वरस्येति जीवेश्वरविभागः क्व चिदुपपादितः॥

संक्षेपशारीरके तु कार्य्योपाधिरयं जीवः कारणोपाधिरीश्वर इति श्रुतिमनुसृत्य अविद्यायां चित्प्रतिबिम्ब ईश्वरः अन्तःकरणे चित्प्रतिबिम्बो जीवः। न चान्तःकरणरूपेण द्रव्येण घटेनाऽऽकाशस्येव चैतन्यस्यावच्छेदसंभवात्तदवच्छिन्नमेव चैतन्यं जीवो ऽस्त्विति वाच्यम्। इह परत्र च जीवभावेनाऽवच्छेद्यचैतन्यप्रदेशस्य भेदेन कृतहानाऽकृताभ्यागमप्रसङ्गात् †। प्रतिबिम्बस्तूपाधेर्गतागतयोरवच्छेदकगतागतयोरवच्छेद्यवन्न भिद्यतइति प्रतिबिम्बपक्षे नायं दोष इत्युक्तम्॥

एवमुक्तेष्वेतेषु जीवेश्वरयोः प्रतिबिम्बविशेषत्वपक्षेषु यद् बिम्बस्थानीयं ब्रह्म ‡ तन्मुक्तप्राप्यं शुद्धचैतन्यम्। चित्रदीपे जीव ईशो शुद्धा चिदिति त्रैविध्यप्रक्रियां विहाय यथा घटावच्छिन्नाऽऽकाशो घटाकाशस्तदाश्रिते जले प्रतिबिम्बितः साभ्रनक्षत्रो जलाकाशः अनवच्छिन्नो महाकाशः महाकाशमध्यवर्तिनि मेघमण्डले वृष्टिलक्षणकार्य्यानुमेयेषु जलरूपतदवयवेषु तुषाराकारेषु प्रतिबिम्बितो मेघाकाश इति वस्तुत एकस्याकाशस्य चातुर्विध्यं तथा स्थूलसूक्ष्मदेहद्वयस्याधिष्ठानतया वर्तमानं § तदवच्छिन्नं चैतन्यं कूटवन्निर्विकारत्वेन स्थितं कूटस्थं तत्र कल्पितेन्तःकरणे प्रतिबिम्बितं चैतन्यं संसारयोगी जीवः अनवच्छिन्नं चैतन्यं ब्रह्म तदाश्रिते मायातमसि स्थितासु सर्वप्राणिनां धीवासनासु प्रतिबिम्बितं चैतन्यमीश्वर इति चैतन्यस्य चातुर्विध्यं परिकल्यान्तः

* त्वविद्येति ३। ४ पु॰ पाठः। मलिनसत्त्वप्रधानेत्यर्थः।

† अस्मिन् लोके ब्राह्मणादिशरीरगतान्तःकरणावच्छिन्नचैतन्यप्रदेशस्य कर्मकर्तृत्वात् लोकान्तरे देवादिशरीरान्तःकरणावच्छिन्नप्रदेशस्य चाकर्तुर्भोक्तृत्वात् कृतहानादिप्रसङ्गः। येन कर्म कृतं न तस्य भोगः। येन कर्म न कृतं तस्याकृतकर्मफलाभ्यागम इत्यर्थः। टी॰

‡ ब्रह्मेति नास्ति द्रा॰ पुस्तके। § विवर्तमानमिति ३। ४ पु॰ पाठः।

करणधीवासनोपरक्ताऽज्ञानोपाधिभेदेन जीवेश्वरविभागो दर्शितः । अयं चाऽपरस्तदभिहितो विशेषः चतुर्विधेष्वेषु चैतन्येषु जीवो ऽहमिति प्रकाशमानः कूटस्थे ऽविद्यातिरोहिताऽसज्ज्ञानन्दरूपविशेषांशे शुक्तौ रूप्यवदध्यस्तः । अत एवेदंत्वरजतत्वयोरिवाधिष्ठानसामान्यांशाध्यस्तविशेषांशरूपयोः स्वयंत्वाऽहंत्वयोः सह प्रकाशः स्वयमहं करोमीत्यादौ । अहंत्वं त्वध्यस्तविशेषांशरूपं पुरुषान्तरस्य पुरुषान्तरे ऽहमिति व्यवहाराभावेन व्यावृत्तत्वात् । स्वयंत्वं चान्यत्व*प्रतियोग्यधिष्ठानसामान्यांशरूपं स्वयं देवदत्तो गच्छतीति पुरुषान्तरेपि व्यवहारेणानुवृत्तत्वात् । एवं परस्पराध्यासादेव कूटस्थजीवयोरविवेको लौकिकानाम् । विवेकस्तु तयोर्बृहदारण्यके प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यतीति जीवाभिप्रायेण † मायोपाधिविनाशानुविनाशप्रतिपादनेनाऽविनाशी वा अरे ऽयमात्मेति कूटस्थाभिप्रायेणाऽविनाशप्रतिपादनेन च स्पष्टः अहमर्थस्य जीवस्य विनाशित्वे कथमविनाशिब्रह्माऽभेदः । नेदमभेदे सामानाधिकरण्यं किं तु बाधायां ‡ यथा यः स्थाणुरेष पुमानिति पुरुषत्वबोधेन स्थाणुत्वबुद्धिर्निवर्त्यते एवमहं ब्रह्मास्मीति कूटस्थब्रह्मरूपत्वबोधेनाध्यस्ताहमर्थरूपत्वं निवर्त्यते । यो ऽयं स्थाणुः पुमानेष पुंधिया स्थाणुधीरिव ब्रह्मास्मीति धिया ऽशेषा ह्यहंबुद्धिर्निवर्त्यतइति नैष्कर्म्यसिद्धिवचनात् । यदि च विवरणाद्युक्तरीत्येदमभेदे सामानाधिकरण्यं तदा जीववाचिनो ऽहंशब्दस्य लक्षणया कूटस्थपरत्वमस्तु तस्याऽबाध्यस्य ब्रह्माभेदयोग्यत्वात् । यस्तु मेघाकाशतुल्यो धीवासनाप्रतिबिम्ब ईश्वर उक्तः सोयं सुषुप्तस्थाने एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुगिति माण्डूक्यश्रुतिसिद्धसौषुप्तानन्दमयस्तत्रैव तदनन्तरमेष सर्वेश्वर एष सर्वज्ञ एषोन्तर्यामी एष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानामिति श्रुतेः । सर्ववस्तुविषयसकलप्राणिधीवासनोपाधिकस्य तस्य सर्वज्ञत्वं तत एव सर्वकर्तृत्वोपपत्तेश्च । न चास्मद्बुद्धिवासनोपहितस्य कस्य चित् सार्वज्ञ्यं नानुभूयतइति वाच्यम् । वासनानां परोक्षत्वेन तदुपहितस्यापि परोक्षत्वादिति ॥

---

* चैतन्येति ४ पु॰ पाठः ।　　† मायेति द्रा॰ नास्ति ।

‡ एवं ब्रह्माहंपदयोः समानविभक्तिमत्त्वरूपं सामानाधिकरण्यमभेदरूपे ऽर्थे नाभ्युपगम्यते ऽभेदासंभवो दोषः स्यात् । पुरुषत्वपदेन कल्पितस्थाणुतादात्म्याभाववत्त्वं विवक्षितं बाधायां तात्पर्यत्वस्वीकारात् । टी॰

ब्रह्मानन्दे तु सुषुप्तिसंयोगान्माण्डूक्योक्त आनन्दमयो जीव इत्युक्तम्। तथा हि जाग्रदादिषु भोगप्रदस्य कर्मणः क्षये निद्रारूपेण विलीनमन्तःकरणं पुनर्भोगप्रदकर्मवशात्प्रबोधे घनीभवति तदुपाधिको जीवो विज्ञानमय इत्युच्यते। स एव पूर्वं सुषुप्तिसमये विलीनावस्थोपाधिकः सन्नानन्दमय इति उच्यते स एव माण्डूक्ये सुषुप्तिस्थान * एकीभूत इत्यादिना दर्शित इति। एवं सति तस्य सर्वेश्वरत्वादिवचनं कथं संगच्छताम्। इत्थं सन्त्यधिदैवतमध्यात्मं च परमात्मनः सविशेषाणि चीणि रूपाणि। तत्राधिदैवतं चीणि शुद्धचैतन्यं चेति चत्वारि रूपाणि चित्रपटदृष्टान्तेन चित्रदीपे समर्थितानि। यथा स्वतः शुभ्रः पटो धौतः अन्नलिप्तो घटित † इति मस्यादिविकारयुक्तो लाञ्छितो वर्णपूरितो रञ्जित इत्यवस्थाचतुष्टयमेकस्यैव चित्रपटस्य तथा परमात्मा मायातत्कार्योपाधिरहितः शुद्धः मायोपहित ईश्वरः अपञ्चीकृतभूतकार्य्यसमष्टिसूक्ष्मशरीरोपहितो हिरण्यगर्भः। पञ्चीकृतभूतकार्य्यसमष्टिस्थूलशरीरोपहितो विराट् पुरुष इत्यवस्थाचतुष्टयमेकस्यैव परमात्मनः। अस्मिँश्च चित्रपटस्थानीये परमात्मनि चित्रस्थानीयः स्थावरजङ्गमात्मको निखिलः प्रपञ्चः। यथा चित्रगतमनुष्याणां चित्राधारवस्त्रसदृशा वस्त्राभासा लिख्यन्ते तथा परमात्माध्यस्तदेहिनामधिष्ठानचैतन्यसदृशाश्चिदाभासाः कल्प्यन्ते ते च जीवनामानः संचरन्तीति। अध्यात्मं तु विश्वतैजसप्राज्ञभेदेन चीणि रूपाणि तत्र सुषुप्तौ विलीनेन्तःकरणे ऽज्ञानमात्रसाक्षी प्राज्ञः। योयमिहानन्दमय उक्तः स्वप्ने व्यष्टिसूक्ष्मशरीराभिमानी तैजसः। जागरे व्यष्टिस्थूलशरीराभिमानी विश्वः। तत्र माण्डूक्यश्रुतिरहमनुभवे प्रकाशमानस्यात्मनो विश्वतैजसप्राज्ञतुरीयावस्थाभेदरूपपादचतुष्टयं सोयमात्मा चतुष्पादित्युपक्रम्य पूर्वपूर्वपादप्रविलापनेन निष्प्रपञ्चब्रह्मात्मकतुरीयपादप्रतिपत्तिसौकर्याय स्थूलसूक्ष्मसूक्ष्मतरोपाधिसाम्याद्विराडादीन्विश्वादिष्वन्तर्भाव्य जागरितस्थानो बहिःप्रज्ञ इत्यादिना विश्वादिपादान्यरूपयत्। अतः प्राज्ञशब्दिते आनन्दमये व्याकृतस्येश्वरस्यान्तर्भावं विवक्षित्वा तत्र सर्वेश्वरत्वादितद्धर्मवचनमिति। इत्थमेव भगवत्पादैर्गौडपादीयविवरणे व्याख्यातम्॥

* पुस्तकेष्वेवमेव पाठः। उपनिषदि तु सुषुप्तस्थान इति बहुत्र दृश्यते।

† घट्टित इति द्रा॰ २ पुस्तकयोः।

दृग्दृश्यविवेके तु चित्रदीपव्युत्पादितं कूटस्थं जीवकोटावन्तर्भाव्य चित्रैविध्यप्रक्रियैवालम्बितेति विशेषः। तत्र ह्युक्तं जलाशयतरङ्गबुद्बुदन्याये-नोपर्युपरि कल्पनाद् जीवस्त्रिविधः। पारमार्थिको व्यावहारिकः प्रातिभासिकश्चेति। तत्रावच्छिन्नः पारमार्थिको जीवः। तस्मिन्नवच्छेदकस्य कल्पितत्वेपि अवच्छेद्यस्य तस्याऽकल्पितत्वेन ब्रह्मणाऽभिन्नत्वात्। तमावृत्य स्थितायां मायायां कल्पितान्तःकरणे चिदाभासो ऽन्तःकरणतादात्म्यापत्त्या ऽहमित्यभिमन्यमानो व्यावहारिकः। तस्य मायिकत्वेपि यावद्व्यवहारमनुवृत्तेः। स्वप्ने तमप्यावृत्य स्थितया मायावस्थाभेदरूपया निद्रया कल्पिते स्वाप्नदेहादावहमभिमानी प्रातिभासिकः। स्वप्नप्रपञ्चेन सह तद्द्रष्टृजीवस्यापि प्रबोधे निवृत्तेरिति। एवमेते प्रतिबिम्बेश्वरवादिनां पञ्चभेदा दर्शिताः॥

विवरणाऽनुसारिणस्त्वाहुः। विभेदजनके ऽज्ञाने नाशमात्यन्तिकं गते आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यतीतिस्मृत्या एकस्यैवाज्ञानस्य जीवेश्वरविभागोपाधित्वप्रतिपादनाद्बिम्बप्रतिबिम्बभावेन जीवेश्वरयोर्विभागः नोभयोरपि प्रतिबिम्बभावेनो * पाधिद्वयमन्तरेणोभयोः प्रतिबिम्बत्वायोगात्। तत्रापि प्रतिबिम्बो जीवः बिम्बस्थानीय ईश्वरः तथा सत्येव लौकिकबिम्बप्रतिबिम्बदृष्टान्तेन स्वातन्त्र्यमीश्वरस्य तत्पारतन्त्र्यं जीवस्य च युज्यते। प्रतिबिम्बगताः पश्यन्नृजुवक्रादिविक्रियाः पुमान् क्रीडेद्यथा ब्रह्म तथा जीवस्थविक्रिया इति कल्पतरूक्तरीत्या लोकवत्तु लीलाकैवल्य † मिति सूत्रमपि संगच्छते। अज्ञानप्रतिबिम्बितस्य जीवस्यान्तःकरणरूपो ज्ञानपरिणामभेदो विशेषाभिव्यक्तिस्थानं सर्वतः प्रसृतस्य सवितृप्रकाशस्य दर्पण इव अतस्तस्य तदुपाधिकत्वव्यवहारोपि। नैतावता ऽज्ञानोपाधिपरित्यागः अन्तःकरणोपाधिपरिच्छिन्नस्यैव चैतन्यस्य जीवत्वे योगिनः कायव्यूहाधिष्ठानत्वानुपपत्तेः न च योगप्रभावात् योगिनोऽन्तःकरणं कायव्यूहाभिव्यक्तियोग्यं वैपुल्यं प्राप्नोतीति तदवच्छिन्नस्य कायव्यूहाधिष्ठानत्वं युज्यतइति वाच्यम्। प्रदीपवदावेशस्तथा हि दर्शयती ‡ तिशास्त्रोपान्त्याधिकरणभाष्यादिषु कायव्यूहे प्रतिदेहमन्तःकरणस्य चक्षुरादिवद्भिन्नस्यैव योगप्रभावात् सृष्टेरुपवर्णनात्। प्रतिबिम्बे बिम्बा

* बिम्बभावेनेति ३ पु॰ पाठः। † व्या॰ सू॰ अ॰ २ पा॰ १ सू॰ ३३।
‡ व्या॰ सू॰ अ॰ ४ पा॰ ४ सू॰ १५।

द्विदमाह * स्वाध्यस्तत्वेन स्वरूपेण तस्य सत्यत्वात् न प्रतिबिम्बरूपजीवस्य मुक्त्यन्वयासंभव इति न तदतिरेकेण मुक्त्यन्वयायाऽवच्छिन्नरूपजीवान्तरं वा प्रतिबिम्बजीवातिरिक्तं जीवेश्वरविलक्षणं कूटस्थशब्दितं चैतन्यान्तरं वा कल्पनीयम् । अविनाशी वा अरे अयमात्मेति श्रवणं जीवस्य तदुपाधिनिवृत्तौ प्रतिबिम्बभावापगमेऽपि स्वरूपं न विनश्यतीत्येतत्परं न तदतिरिक्तकूटस्थनामचैतन्यान्तरपरम् । जीवोपाधिनान्तःकरणादिनाऽवच्छिन्नं चैतन्यं बिम्बभूत ईश्वर एव । यो विज्ञाने तिष्ठन्नित्यादिश्रुत्या ईश्वरस्यैव जीवसन्निधानेन तदन्तर्यामिभावेन विकारान्तरावस्थानश्रवणादिति ॥

अन्ये † तु रूपानुपहितप्रतिबिम्बो न युक्तः सुतरां नीरूपे ‡ गगनप्रतिबिम्बोदाहरणमप्ययुक्तं गगनाभोगव्यापिनि सवितृकरमण्डले सलिले प्रतिबिम्बिते गगनप्रतिबिम्बत्वस्य व्यवहारस्य भ्रममात्रमूलकत्वात् । ध्वनौ वर्णप्रतिबिम्बत्ववादोऽप्ययुक्तः व्यञ्जकतया सन्निधानमात्रेण ध्वनिधर्माणामुदात्तादिस्वराणां वर्णेष्वारोपोपपत्तेर्ध्वनेर्वर्णप्रतिबिम्बोपाधित्वकल्पनाया निष्प्रमाणकत्वात् । प्रतिध्वनिरपि न पूर्वशब्दप्रतिबिम्बः पञ्चीकरणप्रक्रियया पटहपयोनिधिप्रभृतिशब्दानां क्षितिसलिलादिशब्दत्वेन प्रतिध्वनेरेवाकाशशब्दत्वेन तस्यान्यशब्दप्रतिबिम्बत्वाऽयोगात् । वर्णरूपप्रतिशब्दोऽपि न पूर्ववर्णप्रतिबिम्बः वर्णाभिव्यञ्जकध्वनिनिमित्तकप्रतिध्वनेर्मूलध्वनिवदेव वर्णाभिव्यञ्जकत्वेनोपपत्तेः । तस्माद् घटाकाशवदन्तःकरणावच्छिन्नं चैतन्यं जीवः तदनवच्छिन्नमीश्वरः । न चैवमण्डान्तर्वर्तिनश्चैतन्यस्य तत्तदन्तःकरणोपाधिभिः सर्वात्मना जीवभावेनाऽवच्छेदात्तदवच्छेदरहितचैतन्यरूपस्येश्वरस्याण्डाद् बहिरेव सत्त्वं स्यादिति यो विज्ञाने तिष्ठन्नित्याद्यन्तर्यामिभावेन विकारान्तरावस्थानश्रवणं विरुध्यते । प्रतिबिम्बपक्षे तु जलगतस्वाभाविकाकाशे सत्येव प्रतिबिम्बाकाशदर्शनादेकत्र द्विगुणीकृत्य § वृत्तिरुपपद्यते इति वाच्यम् । यतः प्रतिबिम्बपक्षेऽपि उपाधावनन्तर्गतस्यैव चैतन्यस्य तत्र प्रतिबिम्बो वाच्यः न तु जलचन्द्रन्यायेन कृत्स्नप्रतिबिम्बः तदन्तर्गतभागस्य तत्र

* स्वरूपस्य कल्पितत्वव्यवच्छेदो मात्रशब्दार्थः । टी०

† एवं चैतन्यस्य प्रतिबिम्बत्वमुपगच्छतां मतभेदेन जीवेश्वरविभागो दर्शितः । इदानीं तमनभ्युपगन्तॄणां मतेन जीवादिस्वरूपं दर्शयितुं चैतन्यस्य प्रतिबिम्बं निराकरोति । टी०

‡ अविद्यान्तःकरणादाविति शेषः ।

§ प्रतिबिम्बरूपजीवभावेन तत्तदुपाध्यन्तर्यामिभावेन चेत्यर्थः । टी०

प्रतिबिम्बाऽसंभवात् । न हि मेघावच्छिन्नस्याकाशस्यालोकस्य वा जले प्रतिबिम्बवत् जलान्तर्गतस्यापि तत्र प्रतिबिम्बो दृश्यते । न वा मुखादीनां बहिः स्थितिसमय इव जलान्तर्निमज्जनेपि प्रतिबिम्बोस्ति । अतो जलप्रतिबिम्बं प्रति मेघाकाशादेरिवान्तःकरणाद्युपाधिप्रतिबिम्बं प्रति तदन्तर्गतस्यैव बिम्बत्वं स्यादिति बिम्बभूतस्य विकारान्तरवस्थानायोगादीश्वरेन्तर्यामिब्राह्मणाऽऽञ्जस्याभावस्तुल्यः । एतेनावच्छिन्नस्य जीवत्वे कर्तृभोक्तृसमययोस्तत्र तत्रान्तःकरणावच्छेद्यचैतन्यप्रदेशस्य भिन्नत्वात्कृतहानाकृताभ्यागमप्रसङ्ग इति निरस्तम् । प्रतिबिम्बपक्षेपि स्वानन्तर्गतस्य * स्वसन्निहितस्य चैतन्यप्रदेशस्यान्तःकरणे प्रतिबिम्बस्य वक्तव्यतया तत्र तत्रान्तःकरणस्य गमने बिम्बभेदात्प्रतिबिम्बस्यापि भेदावश्यंभावेन दोषतौल्यात् । न चाऽन्तःकरणप्रतिबिम्बो जीव इति पक्षे दोषतौल्ये ऽप्यविद्याप्रतिबिम्बो जीवस्तस्य च तत्र तत्र गत्वरमन्तःकरणं जलाशयव्यापिनो महामेघमण्डलप्रतिबिम्बस्य तदुपरि विसृत्वरस्फीतालोक इव तत्र विशेषाभिव्यक्तिहेतुरिति पक्षे नायं दोषः अन्तःकरणवदविद्याया गत्यभावेन † प्रतिबिम्बभेदानापत्तेरिति वाच्यम् । तथैवावच्छेदपक्षे ऽप्यविद्यावच्छिन्नो जीव इत्यभ्युपगमसंभवात् । तत्राप्येकस्य जीवस्य-क्व चित्प्रदेशे कर्तृत्वं प्रदेशान्तरे भोक्तृत्वमित्येवंकृतहानाकृताभ्यागमदोषापनुत्तये वस्तुतो जीवैक्यस्य शरणीकरणीयत्वेन तन्न्यायादन्तःकरणोपाधिपक्षेपि वस्तुतश्चैतन्यैक्यस्य तदवच्छेदकोपाध्यैक्यस्य च तत्राभ्युपगमेन दोषनिराकरणसंभवाच्च । न चावच्छेदपक्षे यथा स्वयंज्योतिरात्मा विवस्वानपो भिन्ना बहुधैको ऽनुगच्छन् उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजो ऽयमात्मा अत एव चोपमा सूर्यकादिवदि ‡ ति श्रुतिसूत्राभ्यां विरोधः अम्बुवदग्रहणात्तु न तथात्व § मित्युदाहृतसूत्रानन्तरसूत्रेण यथा सूर्यस्य रूपवतः प्रतिबिम्बोदययोग्यं ततो विप्रकृष्टदेशं रूपवज्जलं गृह्यते नैवं || सर्वगतस्यात्मनः प्रतिबिम्बोदययोग्यं किं चिदस्ति ततो विप्रकृष्टमिति प्रतिबिम्बाऽसंभवमुक्त्वा वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेव ¶ मिति तदनन्तरसूत्रेण यथा जलप्रतिबिम्बितः सूर्यो जलवृद्धौ वर्द्धते इव जलह्रासे ह्रसतीव जलचलने चल-

---

* स्वानन्तर्गतस्येति । प्रागुक्तयुक्तिरत्रानुसंधेया । टी॰ † अपरिच्छिन्नत्वादिति भावः ।
‡ व्या॰ सू॰ अ॰ ३ पा॰ २ सू॰ १८ । § व्या॰ सू॰ अ॰ ३ पा॰ २ सू॰ १९ ।
|| सर्वभागस्येति २ पुस्तकपाठः । ¶ व्या॰ सू॰ अ॰ ३ पा॰ २ सू॰ २० ।

तीवेति तस्याध्यासिकं जलानुरोधिवृद्धिह्रासादिभाक्त्वं तथात्मनोन्तःकरणादिना ऽवच्छेदेनोपाध्यन्तर्भावादाध्यासिकतदनुरोधिवृद्धिह्रासादिभाक्त्वमित्येवं दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यादविरोधः इति स्वयं सूत्रकृतैवावच्छेदपक्षे तयोस्तात्पर्यकथनात् । घटसंवृतमाकाशं नीयमाने यथा घटे घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः अंशो नानाव्यपदेशादिति * श्रुतिसूत्राभ्यामवच्छेदपक्षस्यैव परिग्रहाच्च । तस्मात्सर्वगतस्य चैतन्यस्यान्तःकरणादिना ऽवच्छेदो ऽवश्यंभावीत्यावश्यकत्वादवच्छेदो जीव इति पक्षं रोचयन्ते ॥

अपरे तु न प्रतिबिम्बो नाप्यवच्छेदो जीवः किं तु कौन्तेयस्यैव राधेयत्ववदविकृतस्य † ब्रह्मण एवाविद्यया जीवभावः व्याधकुलसंवर्धितराजकुमारदृष्टान्तेन ब्रह्मैव स्वाविद्यया संसरति स्वविद्यया विमुच्यतइति बृहदारण्यकभाष्ये प्रतिपादनात् । राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते तथैवमात्मनो ऽज्ञस्य तत्त्वमस्यादिवाक्यत इति वार्त्तिकोक्तेश्च । एवं च स्वाविद्यया जीवभावमापन्नस्यैव ब्रह्मणः प्रपञ्चकल्पकत्वा ‡ दीश्वरोपि सह सर्वज्ञत्वादिधर्मैः स्वप्नोपलब्धदेवतावज्जीवकल्पित इत्याचक्षते ॥

(१) अथायं जीव एक उतानेकः § अनुपदोक्तपक्षावलम्बिनः के चिदाहुः । एको जीवस्तेन चैकमेव शरीरं सजीवमन्यानि स्वप्नदृष्टशरीराणीव निर्जीवानि तदज्ञानकल्पितं सर्वं जगत् तस्य स्वप्नदर्शनवद्यावदविद्यं सर्वो व्यवहारः । बद्धमुक्तव्यवस्थापि नास्ति जीवस्यैकत्वात् । शुकमुक्त्यादिकमपि स्वाप्नपुरुषान्तरमुक्त्यादिकमिव कल्पितम् । अत्र च संभावितसकलशङ्कापङ्कक्षालनं स्वप्नदृष्टान्तसलिलधारयैव कर्तव्यमिति ॥

अन्ये त्वस्मिन्नेकशरीरैकजीववादे मनःप्रत्ययमलभमाना अधिकं तु भेदनिर्देशात् ‖ लोकवत्तु लीलाकैवल्य ¶ मित्यादिसूत्रैर्जीवाधिक ईश्वर एव जगतः स्रष्टा न जीवस्तस्याप्तकामत्वेन प्रयोजनाभावेपि केवलं लीलयैव जगतः सृष्टिरित्यादिप्रतिपादयद्भिर्विरोधं च मन्यमाना हिरण्यगर्भ एको

* व्या॰ सू॰ अ॰ २ पा॰ ३ सू॰ ४३ । † अविकृतस्यैव ब्रह्मण इति द्रा॰ पु॰ पाठः ।

‡ सर्वप्रपञ्चेति द्रा॰ १ पुस्तकयोः ।

§ ब्रह्मैव स्वाविद्यया संसरति स्वाविद्यया मुच्यतइत्यादिग्रन्थोक्तेत्यर्थः । टी॰

‖ व्या॰ सू॰ अ॰ २ पा॰ १ सू॰ २२ । ¶ व्या॰ सू॰ अ॰ २ पा॰ १ सू॰ ३३ ।

ब्रह्मप्रतिबिम्बो मुख्यो जीवः अन्ये तु तत्प्रतिबिम्बभूताश्चित्र * लिखितमनुष्यदेहार्पितपटाभासकल्पा जीवाभासाः संसारादिभाज इति सविशेषा † ऽनेकशरीरैकजीववादमातिष्ठन्ते ॥

अपरे तु हिरण्यगर्भस्य प्रतिकल्पं भेदेन कस्य हिरण्यगर्भस्य मुख्यं जीवत्वमित्यत्र नियामकं नास्तीति मन्यमाना एक एव जीवो ऽविशेषेण सर्वं शरीरमधितिष्ठति । न चैवं शरीरावयवभेदइव शरीरभेदेपि परस्परसुखाद्यनुसन्धानप्रसङ्गः । जन्मान्तरीयसुखाद्यनुसन्धानादर्शनेन शरीरभेदस्य तदननुसन्धानप्रयोजकत्वक्लृप्तेः । योगिनस्तु कायव्यूहसुखाद्यनुसन्धानं व्यवहितार्थग्रहणवद्योगप्रभावनिबन्धनमिति न तदुदाहरणमित्य ‡ विशेषानेकशरीरैकजीववादं रोचयन्ते ॥

इतरे त्वत्रापि बद्ध § मुक्तव्यवस्थाऽभावस्य तुल्यत्वेन तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवदित्यादिश्रुतेः प्रतिषेधादिति चेन्न शारीरा॥ दित्यधिकरणे बद्धमुक्तत्वप्रतिपादकभाष्यस्य च नाऽऽञ्जस्यमित्यपरितुष्यन्तो ऽन्तःकरणादीनां जीवोपाधित्वाभ्युपगमेनानेकजीववादमाश्रित्य बद्धमुक्तव्यवस्थां प्रतिपद्यन्ते ॥

तेषु के चिदेवमाहुः । यद्यपि शुद्धब्रह्माश्रयविषयमेकमेवाज्ञानं तन्नाश एव च मोक्षस्तथापि जीवन्मुक्तावज्ञानलेशानुवृत्त्यभ्युपगमेनाज्ञानस्य सांशत्वात्तदेव क चिदुपाधौ ब्रह्मावगमोत्पत्तावंशेन निवर्त्तते उपाध्यन्तरेषु यथापूर्वमंशान्तरैरनुवर्त्ततइति ॥

अन्ये तु यथा न्यायैकदेशिमते भूतले घटात्यन्ताभावस्य वृत्तौ घटसंयोगाभावो नियामक इत्यनेकेषु प्रदेशेषु तद्वत्सु संसृज्य वर्त्तमानो घटात्यन्ताभावः क चित्प्रदेशे घटसंयोगोत्पत्त्या तदभावनिवृत्तौ न संसृज्यते एवमज्ञानस्य चैतन्ये वृत्तौ मनो नियामकमिति तदुपाधिना चैतन्यप्रदेशेषु संसृज्य वर्त्तमानमज्ञानं क चिद् ब्रह्मदर्शनोत्पत्त्या भिद्यते हृदयग्रन्थिरिति-

* चित्रपटलिखितेति द्रा· पुस्तके ।
† सविशेषाणि सजीवान्यनेकशरीराणि यस्मिन्नेकजीववादे स तथा । टी·
‡ अविशेषेणाधिष्ठितान्यनेकशरीराणि यस्मिन्नेकजीववादे स तथा । टी·
§ बन्धमुक्तिव्यवस्थेति द्रा· पुस्तकपाठः । || व्या· सू· अ· ४ पा· २ सू· १२ ।

श्रुत्युक्तरीत्या मनसो निवृत्तौ न संसृज्यते अन्यत्र यथापूर्वमवतिष्ठते अज्ञानसंसर्गाऽसंसर्गावेव च बन्धमोक्षावित्याहुः ॥

अपरे तु नाऽज्ञानं शुद्धचैतन्याश्रयं किं तु जीवाश्रयं ब्रह्मविषयं तच्चान्तःकरणप्रतिबिम्बरूपेषु सर्वेषु जीवेषु व्यक्तिषु जातिवत्प्रत्येकपर्यवसायितया वर्तमानमुत्पन्नविद्यं कं चित्त्यजति * नष्टां व्यक्तिमिव जातिः स एव मोक्षः । अन्यं यथापूर्वमाश्रयतीति व्यवस्थेत्याहुः ॥

इतरे तु प्रतिजीवमविद्याभेदमभ्युपगम्यैव तदनुवृत्तिनिवृत्तिभ्यां बद्धमुक्तव्यवस्थां समर्थयन्ते । अस्मिन्पक्षे कस्याऽविद्यया प्रपञ्चः कृतो ऽस्त्विति चेत् विनिगमकाभावात्सर्वाऽविद्याकृतो † ऽनेकतन्त्वारब्धपटतुल्यः । एकस्य मुक्तौ तदविद्यानाशे एकतन्तुनाशे पटस्येव तत्साधारणप्रपञ्चस्य नाशः । तदैव विद्यमानतन्त्वन्तरैः पटान्तरस्येवेतराऽविद्याभिः सकलेतरसाधारणप्रपञ्चान्तरस्योत्पादनमित्येके ॥

तत्तदज्ञानकृतप्रातिभासिकरजतवन्न्यायमते तत्तदपेक्षाबुद्धिजन्यद्वित्ववच्च तत्तदविद्याकृतो वियदादिप्रपञ्चः प्रतिपुरुषं भिन्नः । शुक्तिरजते त्वया यद्दृष्टं रजतं तदेव मयापीतिवदैक्यभ्रममात्रमित्यन्ये ॥

जीवाश्रितादविद्यानिवहाद्भिन्ना मायैवेश्वराश्रिता प्रपञ्चकारणं ‡ जीवानामविद्यास्त्वावरणमात्रे § प्रातिभासिकशुक्तिरजतादिविक्षेपे ऽपि चोपयुज्यन्त इत्यपरे ॥

(८) अवसितमुपादानत्वं तत्प्रसक्तानुप्रसक्तं च । अथ कीदृशं कर्तृत्वं केचिदाहुः तदैक्षत सो ऽकामयत तदात्मानं स्वयमकुरुतेति श्रवणान्न्यायमत इव कार्यानुकूलज्ञानचिकीर्षाकृतिमत्त्वरूपमिति ॥

अन्ये तु चिकीर्षाकृतिकर्तृत्वनिर्वाहाय चिकीर्षाकृत्यन्तरापेक्षायामनवस्थाप्रसङ्गात्कार्यानुकूलज्ञानवत्त्वमेव ब्रह्मणः कर्तृत्वम् । न च ज्ञानेप्येव

---

* जहातीति द्रा० पुस्तके ।

† सर्वेषां जीवानां सर्वाविद्यापरिणाम इत्यर्थः । यद्वा सर्वाविद्याविषयीकृतब्रह्मविवर्तः प्रपञ्च इत्यर्थः । टी०

‡ कारिणीति द्रा० पुस्तकपाठः ।

§ यत्किंचित्कार्यं प्रत्युपादानत्वाभावो मात्रशब्दार्थः । ननु जीवाश्रिताविद्यानां जीवचैतन्याध्यस्तप्रातिभासिकस्वप्नप्रपञ्चोपादानतया तत्रोपयोगसंभवेऽपि शुक्तिरजताद्युपादानत्वं न संभवति शुक्त्याद्यवच्छिन्नचैतन्ये रजताधिष्ठाने तासामसंभवादिति चेत्सत्यम् । आदिपदगृहीतस्वप्न एवात्र विवक्षित इत्यदोषः । यद्वा वाचस्पतिमत इव शुक्तिरजतादेरपि जीवाविद्याविषयीकृतशुक्त्याद्यवच्छिन्नचैतन्यविवर्तत्वमभिप्रेत्य जीवाविद्यानां प्रातिभासिकरजतादावुपयोगकथनोपपत्तेर्नदोषः । टी०

प्रसङ्गः तस्य ब्रह्मस्वरूपत्वेनाकार्यत्वात् । एवं च विवरणे जीवस्य सुखादिकर्तृत्वोक्तिः वीक्षणमात्रसाध्यत्वाद्वियदादि वीक्षितं हिरण्यगर्भद्वारा वीक्षणाधिकप्रयत्नसाध्यत्वात् भौतिकं स्मितमिति * कल्पतरूक्तिश्च संगच्छत इति वदन्ति ॥

अपरे तु कार्यानुकूलस्रष्टव्यालोचनारूपज्ञानवत्त्वं कर्तृत्वं न कार्यानुकूलज्ञानवत्त्वमात्रं शुक्तिरजतस्वाप्नभ्रमादिषु अध्यासानुकूलाधिष्ठानज्ञानवत्त्वेन जीवस्य कर्तृत्वप्रसङ्गात् । न चेष्टापत्तिः अथ रथान् रथयोगान्पथः सृजते स हि कर्तेत्यादिश्रुत्यैव जीवस्य स्वप्नप्रपञ्चकर्तृत्वोक्तेरिति वाच्यम् । भाष्यकारैर्लाङ्गलं गवादीनुद्वहतीतिवत् कर्तृत्वोपचारमात्रं रथादिप्रतिभाननिमित्तत्वेनेति व्याख्यातत्वादित्याहुः ॥

अनेनैव निखिलप्रपञ्चरचनाकर्तृभावेनार्थसिद्धं सर्वज्ञत्वं ब्रह्मणः शास्त्रयोनित्वा † दित्यधिकरणे वेदकर्तृत्वेनापि समर्थितम् ॥

अथ कथं ब्रह्मणः सर्वज्ञत्वं संगच्छते जीववदन्तःकरणाभावेन ज्ञातृत्वस्यैवायोगात् । अत्र सर्ववस्तुविषयसकलप्राणिधीवासनोपरक्ताऽज्ञानोपाधिक ईश्वरः अतस्तस्य सर्वविषयवासनासाक्षितया सर्वज्ञत्वमिति भारतीतीर्थादिपक्षः प्रागेव दर्शितः ॥

प्रकटार्थकारास्त्वाहुः । यथा जीवस्य स्वोपाध्यन्तःकरणपरिणामाश्चैतन्यप्रतिबिम्बग्राहिण इति तद्योगाज्ज्ञातृत्वम् एवं ब्रह्मणः स्वोपाधिमायापरिणामाश्चित्प्रतिबिम्बग्राहिणः सन्तीति तत्प्रतिबिम्बितैः स्फुरणैः कालत्रयवर्तिनोपि प्रपञ्चस्यापरोक्षेणाऽवकलना ‡ त्सर्वज्ञत्वमिति ॥

तत्त्वशुद्धिकारास्तूक्तरीत्या ब्रह्मणो विद्यमाननिखिलप्रपञ्चसाक्षात्कारसंभवात्तज्जनितसंस्कारवत्तया च स्मरणोपपत्तेरतीतसकलवस्त्ववभाससिद्धिः । सृष्टेः प्राङ् मायायाः सृज्यमाननिखिलपदार्थस्फुरणरूपेण जीवादृष्टानुरोधेन विवर्तमानत्वात्तत्साक्षितया तदुपाधिकस्य ब्रह्मणोपि तत्साधकत्वसिद्धेरनागतवस्तुविषयविज्ञानोपपत्तिरिति सर्वज्ञत्वं समर्थयन्ते ॥

कौमुदीकृतस्तु वदन्ति स्वरूपज्ञानेनैव ब्रह्मणः स्वसंसृष्टसर्वावभासकत्वात्सर्वज्ञत्वम् । अतीतानागतयोरप्यविद्यायां चित्रभित्तौ विमृष्टानुन्मीलित-

* स्मृतमिति १ पुस्तके । † व्या॰ सू॰ अ॰ १ पा॰ १ सू ३ । ‡ विषयीकरणादित्यर्थः । टी॰

घिषव * त्संस्कारात्मना सत्त्वेन तत्संसर्गस्याप्युपपत्तेः । न तु वृत्तिज्ञानैस्तस्य सर्वज्ञत्वं तमेव भान्तमनुभाति सर्वमिति सावधारणश्रुतिविरोधात् । सृष्टेः प्रागेकमेवाद्वितीयमित्यवधारणानुरोधेन महाभूतानामिव वृत्तिज्ञानानामपि प्रलयस्य वक्तव्यतया ब्रह्मणस्तदा सर्वज्ञत्वाभावापत्त्या प्राथमिकमायाविवर्त्तरूपे ईक्षणे तत्पूर्वकमहाभूतादौ च स्रष्टृत्वाभावप्रसङ्गाच्च । एवं सति ब्रह्मणः सर्वविषयज्ञानात्मकत्वमेव स्यान्न तु सर्वज्ञातृत्वरूपं सर्वज्ञत्वमिति चेत्सत्यं सर्वविषयज्ञानात्मकमेव ब्रह्म न तु सर्वज्ञानकर्तृत्वरूपं ज्ञातृत्वमस्ति ॥

अत एव वाक्यान्वया † दित्यधिकरणे विज्ञातृत्वं जीवलिङ्गमित्युक्तं भाष्यकारैः । यः सर्वज्ञ इत्यादिश्रुतिरपि दृश्यत्वावच्छिन्नरूपेणैव योजनीयेति । यद्यपि ब्रह्म स्वरूपचैतन्येनैव ‡ स्वसंसृष्टसर्वावभासकं तथापि तस्य स्वरूपेणाऽकार्यत्वेपि दृश्यावच्छिन्नरूपेण तु ब्रह्मकार्यत्वाद्यः सर्वज्ञ इति ज्ञानजननकर्तृत्वश्रुतेरपि न कश्चिद्विरोध इत्याचार्यवाचस्पतिमिश्राः ॥

(१०) नन्वीश्वरवज्जीवोपि वृत्तिमनपेक्ष्य स्वरूपचैतन्येनैव किमिति विषयान्नावभासयति । अत्रोक्तं विवरणे ब्रह्मचैतन्यं सर्वोपादानतया सर्वतादात्म्यापन्नं स्वसंसृष्टं सर्वमवभासयति न जीवचैतन्यं तस्याऽविद्योपाधिकतया सर्वगतत्वे ऽप्यनुपादानत्वेनासङ्गित्वात् । यथा सर्वगतं गोत्वसामान्यं स्वभावादश्वादिव्यक्तिसङ्गित्वाभावेपि सास्नावद्व्यक्तौ संसृज्यते एवं विषयाऽसङ्ग्यपि जीवः स्वभावादन्तःकरणे संसृज्यते तथा च यदा ऽन्तःकरणपरिणामो वृत्तिरूपो नयनादिद्वारेण निर्गत्य विषयपर्यन्तं चक्षूरश्मिवज्झटिति दीर्घप्रभाकारेण परिणम्य विषयं व्याप्नोति तदा तमुपारुह्य तं विषयं गोचरयति केवलाग्न्यदाह्यस्यापि § तृणादेरयःपिण्डसमारूढाग्निदाह्यत्ववत्केवलजीवचैतन्याप्रकाश्यस्यापि घटादेरन्तःकरणवृत्त्युपारूढस्य तत्प्रकाश्यत्वं युक्तम् । यद्वा ऽन्तःकरणोपाधिकत्वेन जीवः परिच्छिन्नः अतः संसर्गाभावान्न घटादिकमवभासयति वृत्तिद्वारा तत्संसृष्टविषयावच्छिन्नब्रह्मचैतन्याभेदाभिव्यक्तौ तं विषयं प्रकाशयति । अथ वा जीवः सर्वगतो ऽप्यविद्यावृतत्त्वात्स्वयमप्यप्रकाशमान-

---

* चित्रस्यानुन्मीलितत्वमनभिव्यक्तत्वं तत्र हेतुर्विमृष्टत्वम् । टी॰

† व्या॰ सू॰ अ॰ १ पा॰ ४ सू॰ १९ । ‡ न मायावृत्तिभिरित्येवकारार्थः । टी॰

§ प्रकाश्यानुमेयतैजसप्रसरेणवदाह्यस्येत्यर्थः ।

तया विषयानवभासयन् विषयविशेषे वृत्त्युपरागादावरणतिरोधानेन तत्रैवा-भिव्यक्तस्तमेव विषयं प्रकाशयति । एवं च चिदुपरागार्थत्वेन विषयचैतन्या-भेदाभिव्यक्त्यर्थत्वेनावरणाभिभवार्थत्वेन वा वृत्तिनिर्गममपेक्ष्य तत्संसृष्टविष-यमात्रावभासकत्वाज्जीवस्य किंचिज्ज्ञत्वमप्युपपद्यतइति ॥

अथ प्रथमपक्षे* सर्वगतस्य जीवस्य वृत्त्यधीनः को विषयोपरागः । वृत्त्यापि हि पूर्वसिद्धयोः निष्क्रिययोर्जीवविषयचैतन्ययोस्तादात्म्यस्य संयो-गस्य वा न भवत्याधानम्† । अत्र के चिदाहुः । विषयविषयिभावसंबन्ध एवेति ॥

अन्ये तु विषयविषयिभावमात्रनियामिका वृत्तिश्चेदनिर्गताया अप्यै-न्द्रियकवृत्तेस्तन्नियामकत्वं नातिप्रसङ्गावहमिति तन्निर्गमाभ्युपगमवैयर्थ्यापत्तेः स नाऽभिसंहितः किं तु विषयसन्निहित‡जीवचैतन्यतादात्म्यापन्नाया वृत्ते-र्विषयसंयोगे तस्यापि तद्द्वारकः परंपरासंबन्धो लभ्यतइति स एव चिदु-परागोऽभिसंहित इत्याहुः ॥

अपरे तु साक्षादपरोक्षचैतन्यसंसर्गिण एव सुखादेरापरोक्ष्यदर्शनादप-रोक्षविषये साक्षात्संसर्ग एष्टव्यः तस्माद्वृत्तेर्विषयसंयोगे वृत्तिरूपावच्छेदकला-भात्तदवच्छेदेन तदुपादानस्य जीवस्यापि संयोगजसंयोगः संभवति कारणाका-रणसंयोगात्कार्याकार्यसंयोगवत् कार्याकार्यसंयोगात्कारणाकारणसंयोगस्यापि युक्तितौल्येनाभ्युपगन्तुं युक्तत्वादित्याहुः ॥

एकदेशिनस्त्वन्तःकरणोपहितस्य विषयावभासकचैतन्यस्य§ विषयता-दात्म्यापन्नब्रह्मचैतन्याभेदाभिव्यक्तिद्वारा विषयतादात्म्यसंपादनमेव चिदुपरा-गोऽभिसंहितः सर्वगततया सर्वविषयसंनिहितस्यापि जीवस्य तेन|| रूपेण विषयावभासकत्वे तस्य साधारणतया पुरुषविशेषापरोक्ष्यव्यवस्थित्ययोगेन तस्यान्तःकरणोपहितत्वरूपेणैव विषयावभासकत्वात् । एवं च विषयापरोक्ष्ये आध्यासिकसंबन्धो नियामक इति सिद्धान्तोपि संगच्छते । न चैवं द्वितीयप-क्षसांकर्यं जीवस्य सर्वगतत्वे प्रथमः पक्षः परिच्छिन्नत्वे द्वितीय इत्येव तयो-र्भेदादित्याहुः ॥

---

* विवरणमतइत्यर्थः । † आधानमुत्पादनम् । टी॰

‡ विषयव्यापितया उत्पन्नां वृत्तिं प्रति विषयसंनिहितजीवचैतन्यस्याधिष्ठानतया वृत्तेस्तत्ता-दात्म्यं बोध्यम् । टी॰ § जीवचैतन्यस्येति ३ । ४ पु॰ पाठः । || वृत्तिमनन्तर्भाव्य स्वरूपमात्रेण ।

(१२) अथ द्वितीयपक्षे केयमभेदाभिव्यक्तिः । के चिदाहुः । कुल्याद्वारा तटाककेदारसलिलयोरिव विषयान्तःकरणावच्छिन्नचैतन्ययोर्वृत्तिद्वारा एकीभावोऽभेदाभिव्यक्तिः । एवं च यद्यपि विषयावच्छिन्नं ब्रह्मचैतन्यमेव विषयप्रकाशकं तथापि तस्य वृत्तिद्वारैकीभावेन जीवित्वं संपन्नमिति जीवस्य विषयप्रकाशोपपत्तिरिति ॥

अन्ये त्वाहुः । बिम्बस्थानीयस्य विषयावच्छिन्नस्य ब्रह्मणः प्रतिबिम्बभूतेन जीवेनैकीभावो नाभेदाभिव्यक्तिः व्यावर्त्तकोपाधौ दर्पणइव जाग्रति * तयोरैकीभावायोगात् । वृत्तिकृता भेदाभिव्यक्त्या विषयावच्छिन्नस्य ब्रह्मणो जीवत्वप्राप्तौ ब्रह्मणस्तदा तद्विषयसंसर्गाभावे तद्द्रष्टृत्वसंभवे सति तस्य सर्वज्ञत्वाभावापत्तेश्च । किं तु विषयावच्छिन्नं ब्रह्मचैतन्यं विषयसंसृष्टाया वृत्तेरग्रभागे † विषयप्रकाशकं प्रतिबिम्बं समर्पयतीति ‡ तस्य प्रतिबिम्बस्य जीवेनैकीभावः । एवं चान्तःकरणतद्वृत्तिविषयावच्छिन्नचैतन्यानां प्रमातृप्रमाणप्रमेयभावेनाऽसंकरोऽप्युपपद्यते । न च वृत्त्युपहितचैतन्यस्य विषयप्रमातृत्वे तस्य विषयाधिष्ठानचैतन्यस्येव विषयेणाध्यासिकसंबन्धाभावाद्विषयापरोक्षे आध्यासिकसंबन्धस्तन्त्रं न स्यादिति वाच्यम् । विषयाधिष्ठानचैतन्यस्यैव विषयेणावच्छिन्नस्य वृत्तौ प्रतिबिम्बिततया तदभेदेन तत्संबन्धसत्त्वादिति § ॥

अपरे त्वाहुः । बिम्बभूतविषयाधिष्ठानचैतन्यमेव साक्षादाध्यासिकसंबन्धलाभाद्विषयप्रकाशकमिति तस्यैव बिम्बत्वविशिष्टरूपेण भेदसद्भावेपि तदुपलक्षितचैतन्यात्मनैकीभावोऽभेदाभिव्यक्तिः । न चैवं सति जीवब्रह्मसांकर्यं न वा ब्रह्मणः सर्वज्ञत्वविरोधः बिम्बात्मना तस्य यथापूर्वमवस्थानादिति ॥

(१३) अथ तृतीये पक्षे को नामाऽऽवरणाभिभवः अज्ञाननाशश्चेत् घटज्ञानेनैवाज्ञानमूलः प्रपञ्चो निवर्त्तेतेति चेत् अत्र के चिदाहुः । चैतन्यमात्रावरकस्या-

---

* दर्पणे प्रतिबिम्बदशायां बिम्बप्रतिबिम्बयोरभेदाभिव्यक्तिर्नास्ति तयोस्तदा भेदानुभवात्तथा प्रकृते विषयादिरूपभेदकोपाधौ सति सा न संभवतीत्यर्थः । टी॰

† वृत्तिर्हि हृदयस्थान्तःकरणमारभ्य विषयपर्यन्तमविच्छिन्ना कौस्तुभमण्यादिप्रभावद्दीर्घीभावमापन्ना तिष्ठति तस्या वृत्तेर्विषयसंसृष्टो भागोऽग्रभाग उच्यते तत्र यो ब्रह्मणः प्रतिबिम्बस्तस्य विषयप्रकाशकस्य जीवेनैकीभाव इहाभेदाभिव्यक्तिर्विवक्षिता वृत्तिवृत्तिमतोस्तादात्म्यरूपाभेदसत्त्वेन तत्प्रतिबिम्बयोरभेदाभिव्यक्तिसंभवात् । टी॰

‡ प्रतिबिम्बयतीति ४ पु॰ पाठः ।

§ तत्संबन्धस्येव तत्सम्बन्धत्वादिति द्वा॰ पुस्तके ।

ऽज्ञानस्य विषयावच्छिन्नप्रदेशे खद्योतादिप्रकाशेन महान्धकारस्येव ज्ञानेनैकदेशेन नाशो वा कटवत्संवेष्टनं वा भीतभटवदपसरणं वा ऽभिभव इति ॥

अन्ये त्वज्ञानस्यैकदेशेन नाशे उपादानाभावात्पुनस्तत्र कन्दलनायोगेन * सकृदपगते समयान्तरे ऽप्यावरणाभावप्रसङ्गान्निष्क्रियस्यापसरणसंवेष्टनयोरसंभवाच्च न यथोक्तरूपो ऽभिभवः संभवति । अतश्चैतन्यमात्रावरकस्याप्यज्ञानस्य तत्तदाकारवृत्तिसंसृष्टावस्थविषयावच्छिन्नचैतन्यानावरकत्वस्वाभाव्यमेवाभिभवः । न च विषयावगुण्ठनपटवद्विषयचैतन्यमाश्रित्य स्थितस्याज्ञानस्य कथं तदनावरकत्वं युज्यतइति शङ्क्यम् । अहमज्ञ इति प्रतीत्या ऽहमनुभवे प्रकाशमानचैतन्यमाश्रयत एव तस्य तदनावरकत्व † प्रतिपत्तेरित्याहुः ॥

अपरे तु घटं न जानामीति घटज्ञानविरोधित्वेन घटज्ञाने सति घटाज्ञानं निवृत्तमिति तन्निवर्त्यत्वेन चानुभूयमानं न मूलाज्ञानं शुद्धचैतन्यविषयस्य तद्ज्ञाननिवर्त्यस्य च तस्य तथात्वायोगात् । किं तु घटावच्छिन्नचैतन्यविषयमूलाज्ञानस्यावस्थाभेदरूपमज्ञानान्तरमिति तन्नाश एवाभिभवः । न चैवमेकेन ज्ञानेन तन्नाशे तत्समानविषयाणां ज्ञानान्तराणा ‡ मावरणाभिभावकत्वानापत्तिः यावन्ति ज्ञानानि तावन्त्य § ज्ञानानीत्यभ्युपगमादित्याहुः ॥

इमानि चावस्थारूपाण्यज्ञानानि मूलाऽज्ञानवदज्ञानत्वादनादीनीति || के चित् ॥

व्यावहारिकौ जगज्जीवावावृत्य स्वाप्नौ जगज्जीवौ विक्षिपन्ती ¶ निद्रा तावदावरणविक्षेपशक्तियोगादज्ञानावस्थाभेदरूपा तथा सुषुप्त्यवस्थाप्यन्तःकरणादौ विलीने सुखमहमस्वाप्सं न किं चिदवेदिषमिति परामर्शदर्शनान्मूलाज्ञानवत्सुषुप्तिकाले ऽनुभूयमानाऽज्ञानावस्थाभेदरूपैव तयोश्च जाग्रद्भोगप्रदकर्मोपरमे सत्येवोद्भवात्सादित्वमिति तद्वदन्यदप्यज्ञानमवस्थारूपं सादीत्यन्ये ॥

नन्वनादित्वपक्षे घटे प्रथममुत्पन्नेनैव ज्ञानेन सर्वतदज्ञाननाशो भवेत्

---

* उत्पत्त्यसंभवादित्यर्थः ।

† जीवचैतन्याश्रितमप्यज्ञानं न तदावृणोति तस्यावृतत्वे सर्वव्यवहारलोपप्रसङ्गादिति दहराधिकरणभाष्ये साधितत्वात्साक्षिचैतन्यस्यानावृततया वक्ष्यमाणत्वाच्चेति भावः । टी॰

‡ अज्ञानान्तराणामिति ४ पु॰ पाठः ।

§ तावन्ति तन्निवर्त्याज्ञानानीति द्रा॰ पुस्तके ।

|| देवताधिकरणे मूलाज्ञानानादित्वस्य श्रुतिन्यायाभ्यां साधितत्वादिति भावः । टी॰

¶ सृजन्तीत्यर्थः । टी॰

विनिगमनाविरहात्तदवच्छिन्नचैतन्यावरकसर्वाज्ञानानाशे विषयप्रकाशायोगाच्च अतः पाश्चात्यज्ञानानामावरणानभिभावकत्वं तदवस्थमेवेतिचेत् । अत्र केचिदाहुः । यथा ज्ञानप्रागभावानामनेकेषां सत्त्वेप्येकज्ञानोदये एक एव प्रागभावो निवर्त्तते संशयादिजननशक्ततया तदावरणरूपेषु प्रागभावान्तरेषु सत्स्वपि विषयावभासस्तथैकज्ञानोदये एकमेवाज्ञानं निवर्त्तते अज्ञानान्तरेषु सत्स्वपि विषयावभास इति ॥

अन्ये त्वावृतस्यापरोक्ष्यं विरुद्धमेकज्ञानोदये च प्रागभावान्तरसत्त्वेपि यावद्विशेषदर्शनाभावकूटरूपमावरणं विशेषदर्शनात्तन्नास्तीति मन्यमाना वदन्ति यदा यदज्ञानमावृणोति तदा तेन ज्ञानेन तस्यैव नाशः सर्वं च सर्वदा नावृणोति वैयर्थ्यात्किं त्वावरकाज्ञाने वृत्त्या नाशिते तद्वृत्त्युपरमे ऽज्ञानान्तरमावृणोति । न चैवं सति ब्रह्मावगमोत्पत्तिकाले ऽनावरकत्वेन स्थितानामज्ञानानां ततो ऽप्यनिवृत्तिप्रसङ्गः । तेषां साक्षात्तद्विरोधित्वाभावेपि तन्निवर्त्त्यमूलाज्ञानपरतन्त्रतया * ऽज्ञानसंबन्धादिवत्तन्निवृत्त्यैव निवृत्त्युपपत्तेः । एतदर्थमेव तेषां तदवस्थाभेदरूपतया तत्पारतन्त्र्यमिष्यत इति ॥

अपरे त्वज्ञानस्य सविषयस्वभावत्वादुत्सर्गतः सर्वं सर्वदा ऽऽवृणोत्येव । न च विषयोत्पत्तेः प्रागावरणीयाभावेनावरकत्वं न युज्यतइति वाच्यम् । तदापि सूक्ष्मरूपेण तत्सत्त्वादिति † मन्यमानाः कल्पयन्ति यथा बहुजनसमाकुले प्रदेशे कस्य चिच्छिरसि पतन्नशनिरितरानप्यपसारयति यथा वा सन्निपातहरमौषधमेकं दोषं निवर्त्तयद्दोषान्तरं दूरीकरोति एवमेकमज्ञानं नाशयज्ज्ञानमज्ञानान्तराण्यपि तिरस्करोति तिरस्कारश्च यावज्ज्ञानस्थिति ‡ तदावरणशक्तिप्रतिबन्ध इति ॥

नन्वेवं सति धारावाहिकस्थले द्वितीयादिवृत्तीनामावरणानभिभावकत्वे वैफल्यं स्यात् प्रथमज्ञानेनैव निवर्त्तनतिरस्काराभ्यामावरणमात्रस्याभिभवादिति । अत्राहुः वृत्तितिरस्कृतमप्यज्ञानं तदुपरमे पुनरावृणोति प्रदीपतिरस्कृतं तम इव दीपोपरमे । वृत्त्युपरमसमये वृत्त्यन्तरोदये तु तिरस्कृतमज्ञानं तथैवाव-

---

* कार्यतयेत्यर्थः । † सत्कार्यवादाभ्युपगमादिति भावः ।

‡ तावदावरणेति द्रा· पुस्तके पाठः ।

तिष्ठते प्रदीपोपरमसमये प्रदीपान्तरोदये तम इव । तथा च यस्मिन्सत्यग्रिमक्षणे यस्य सत्त्वं यद्व्यतिरेके चाऽसत्त्वं तत् तज्जन्यमिति प्रागभावपरिपालनसाधारणलक्षणानुरोधेनानावरणस्य * द्वितीयादिवृत्तिकार्यत्वस्यापि लाभान्न तद्वैफल्यमिति ॥

न्यायचन्द्रिकाकृतस्त्वाहुः । केन चिज्ज्ञानेन कस्य चिदज्ञानस्य नाश एव न त्वावरकाणामप्यज्ञानान्तराणां तिरस्कारः । तथा च धारावाहिकद्वितीयादिवृत्तीनामप्येकैकाज्ञाननाशकत्वेन साफल्यम् । न चैवं ज्ञानोदये ऽप्यावरणासंभवाद्विषयानवभासप्रसङ्गः अवस्थारूपाण्यज्ञानानि तत्त † त्कालकलोपलक्षितस्वरूपावरकाणि ज्ञानानि च यावत्स्वकालोपलक्षितविषयावरकाज्ञाननाशकानि ‡ तथा च किंचिज्ज्ञानोदये तत्कालीनविषयावरकाज्ञानस्य नाशाद्विद्यमानानामज्ञानान्तराणामन्यकालीनविषयावरकत्वाच्च न तत्कालीने विषयावभासे का चिदनुपपत्तिः । कारीरीफले § वृष्टावासन्नसमयस्येवाज्ञानविषये घटादौ तत्कालस्योपलक्षणतया विषयकोटावननुप्रवेशेन सूक्ष्मतत्तत्कालभेदाविषयैर्धारावाहिकद्वितीयादिज्ञानैरज्ञानानां निवृत्तावपि न का चिदनुपपत्तिरिति ॥

के चित्तु प्रथमज्ञाननिवर्त्यमेवाज्ञानं स्वरूपावरकं द्वितीयादिज्ञाननिवर्त्यानि तु देशकालविशेषणान्तरविशिष्टविषयाणि । अत एव सत्तानिश्चयरूपे ऽज्ञाननिवर्तके चैत्रदर्शने सकृज्जाते चैत्रं न जानामीति स्वरूपावरणं नानुभूयते किं त्विदानीं स कुत्रेति न जानामीत्यादिरूपेण विशिष्टावरणमेव । विस्मरणशालिनः क्व चित्सकृद् दृष्टेऽपि न जानामीति स्वरूपावरणं दृश्यते चेत्तत्र तथास्तु । अन्यत्र सकृद्दृष्टे विशिष्टविषयाण्येवाज्ञानानि ज्ञानानि च । न चैवं सति धारावाहिकद्वितीयादिज्ञानानामज्ञाननिवर्तकत्वं न स्यात्स्थूलकालविशिष्टाज्ञानस्य प्रथमज्ञानेनैव निवृत्तेः पूर्वापरज्ञानव्यावृत्तसूक्ष्मकालविशि-

---

* आवरणतिरस्कारस्येत्यर्थः । टी॰   † कालोपलक्षितानीति द्वा॰ पुस्तकयोः ।

‡ अवस्थाज्ञानानां सर्वेषां मूलाज्ञानस्येव सर्वदा विषयचैतन्यावरकत्वं नास्ति वैयर्थ्यात् कं तु किं चिदज्ञानं कं चित्कालं विषयचैतन्यमावृणोति किं चिच्च कालान्तरे तदावृणोतीत्यनेन प्रकारेण कालविशेषैरुपलक्षितविषयचैतन्यावरकत्वं ज्ञानानामपि स्वस्वोदयकाले स्वस्वविषयावरकत्वेन प्रसक्ताज्ञाननिवर्तकत्वमित्यर्थः । टी॰

§ कारीरीनामकेष्टिफलभूता वृष्टिरिष्टिसमाप्त्युत्तरक्षणएव वक्तव्या न कालान्तरे तदानीं ष्यतः सस्यस्य संजीवने कालान्तरीयवृष्टेरनुपयोगात्तथा चासन्नसमयस्य वृष्ट्यविशेषणतया फलकोटिप्रवेशो नापेयते वृष्ट्या विनापि समयविशेषसंभवात्किं तु समयान्तरव्यावर्तकतयोपलक्षणत्वमेवाश्रितमित्यर्थः । टी॰

ष्टाज्ञानस्य तदविषयैर्द्वितीयादिज्ञानैर्निवृत्त्ययोगादिति वाच्यम् । धारावहनस्थले प्रथमोत्पन्नाया एव वृत्तेस्तावत्कालावस्थायित्वसंभवेन वृत्तिभेदानभ्युपगमात्तदभ्युपगमेपि स्थूलकालावस्थायि * पञ्चषवृत्ति † रूपत्वसंभवेन परस्परव्यावृत्तस्थूलकालादिविशेषणभेदविषयत्वोपपत्तेः प्रतिक्षणोत्पादनेकवृत्तिसंतानरूपत्वाभ्युपगमेपि द्वितीयादिवृत्तीनामधिगतार्थमात्रविषयतया प्रामाण्याभावेनावरणानिवर्त्तकत्वेप्यहानेश्च । न हि विषयाबाधमात्रं प्रामाण्यं प्रागवगतानधिगतयोः पर्वततद्वृत्तिपावकयोरनुमितिविषययोरबाधस्याविशेषेणोभयत्राप्यनुमितेः प्रामाण्यप्रसङ्गात् । न चेष्टापत्तिः वह्नावनुमितिः प्रमाणमितिवत्पर्वतेऽप्यनुमितिः प्रमाणमिति व्यवहारादर्शनात् । विवरणे साक्षिसिद्धस्याज्ञानस्याभावव्यावृत्तिप्रत्यायनार्थानुमानादिविषयत्वेपि प्रमाणावेद्यत्वोक्तेश्च । तस्माद् द्वितीयादिवृत्तीनां प्रामाण्याभावादुपासना ‡ दिवृत्तीनामिवाज्ञानानिवर्त्तकत्वेपि न हानिः प्रमाणवृत्तीनामेव तन्निवर्त्तकत्वाभ्युपगमात् ॥ 

ननु नायमपि नियमः परोक्षवृत्तेर्नियमेनाज्ञानानिवर्त्तकत्वादिति चेत् । अत्र केचिदाहुः । द्विविधं विषयावरकमज्ञानम् एकं विषयाश्रितं रज्ज्वादिविक्षेपोपादानभूतं कार्यकल्प्यम् । पुरुषाश्रितमन्यत् § विषयमहं न जानामीत्यानुभविकम् § । पुरुषाश्रितस्य विषयसंभिन्नविक्षेपोपादानत्वासंभवेन विषयाश्रितस्य विषयमहं ‖ न जानामीति साक्षिरूपप्रकाशसंसर्गायोगेन द्विविधस्याप्यावश्यकत्वात् । एवं च परोक्षस्थले वृत्तेर्निर्गमनाभावात् दूरस्थवृक्षे आप्तवाक्यात्परिमाणविशेषावगमेपि तद्विपरीतपरिमाणविक्षेपदर्शनाच्च ¶ विषयगताऽज्ञानानिवृत्तावपि पुरुषगताज्ञाननिवृत्तिरस्त्येव शास्त्रार्थं न जानामीत्यनुभूताज्ञानस्य तदुपदेशानन्तरं निवृत्त्यनुभवात् । अत एवानुमेयादौ सुषुप्तिव्यावृत्तिरिति विवरणस्य तद्विषयाज्ञाननिवृत्तिरर्थ इत्युक्तं तत्त्वदीपने इति ॥

अन्ये तु नयनपटलवत्पुरुषाश्रितमेवाज्ञानं विषयावरणं न तदतिरेकेण विषयगताज्ञाने प्रमाणमस्ति । न च पुरुषाश्रितस्य विषयगतविक्षेप-

---

* वृत्तीनां स्वविरोधिवृत्त्यन्तरनाश्यत्वमेवाभ्युपेयते न तु द्वितीयक्षणनाश्यत्वमिति भावः ।

† पञ्चषड्वृत्तीति बहु पु॰ पाठः । परं त्वयुक्तः ।

‡ उपासनावृत्तिर्न ज्ञानं क्लृप्ततत्कारणाजन्यत्वात् किं तु गमनादिवत्क्रियारूपा पुरुषकृतिसाध्यत्वादिति । टी॰　　§ § एतन्मध्यस्थं ४ पु॰ नास्ति ।

‖ इदमहं नेति द्रा॰ १ पुस्तकयोः ।　　¶ अतिरिक्तवृत्त्यापीति ४ पु॰ पाठः ।

परिणामित्वं न संभवति तत्संभवे वा दूरस्थवृक्षपरिमाणे परोक्षज्ञानादज्ञाननिवृत्तौ विपरीतपरिमाणविक्षेपो न संभवतीति वाच्यम् । वाचस्पतिमते सर्वस्य प्रपञ्चस्य जीवाश्रिताज्ञानविषयीकृतब्रह्मविवर्तत्वेन तद्वच्छुक्तिरजतादेः पुरुषाश्रिताज्ञानविषयीकृतब्रह्मविवर्तत्वोपपत्तेः । परोक्षवृत्त्यैकावस्थानिवृत्तावप्यवस्थान्तरेण विपरीतपरिमाणविक्षेपोपपत्ते * श्चेत्याहुः ॥

अपरे तु शुक्तिरजतादिपरिणामोपपत्त्याऽज्ञस्याद्विषयावगुण्ठनपटवद्विषयगतमेवाज्ञानं तदावरणम् । न च तथा सत्यऽज्ञानस्यान्तःकरणोपहितसाक्ष्यसंसर्गेण ततः प्रकाशानुपपत्तिः परोक्षवृत्तिनिवर्त्यत्वासंभवश्च दोष इति वाच्यम् । अवस्थारूपाज्ञानस्य साक्ष्यसंसर्गेपि † तत्संसृष्टमूलाज्ञानस्यैव शुक्तिमहं न जानामीति प्रकाशोपपत्तेः । शुक्त्यादेरपि मूलाज्ञानविषयचैतन्याभिन्नतया तद्विषयत्वानुभवाविरोधात् । विवरणादिषु मूलाज्ञानसाधनप्रसङ्ग एव इदमहं न जानामीति प्रत्यक्षप्रमाणोपदर्शनाच्च ‡ हमक्ष इति सामान्यतोऽज्ञानानुभव एव मूलाज्ञानविषयः शुक्तिमहं न जानामीत्यादिविषयविशेषालिङ्गिताज्ञानानुभवस्त्ववस्थाज्ञानविषय इति विशेषाभ्युपगमेपि अवस्थाऽवस्थावतोरभेदेन मूलाज्ञानस्य साक्षिसंसर्गाद्वा साक्षिविषयचैतन्ययोर्वास्तवैक्याद्वा विषयगतस्याप्यवस्थाज्ञानस्य साक्षिविषयत्वोपपत्तेः । परोक्षज्ञानस्याज्ञानानिवर्तकत्वेपि ततस्तन्निवृत्त्यनुभवस्य सत्तानिश्चयरूपपरोक्ष § वृत्तिप्रतिबन्धकप्रयुक्तानन्नुभवनिवृत्ति || निबन्धनभ्रान्तित्वोपपत्तेरपरोक्षज्ञानस्यैवाज्ञाननिवर्तकत्वनियमाभ्युपगमादित्याहुः ॥

ननु नायमपि नियमः अविद्याहंकारसुखदुःखादितद्धर्मप्रत्यक्षस्याज्ञाननिवर्तकत्वानभ्युपगमादिति चेत् न । अविद्यादिप्रत्यक्षस्य साक्षिरूपत्वेन वृत्तिरूपापरोक्षज्ञानस्यावरणनिवर्तकत्वनियमानपायात् ॥

अथ कोऽयं साक्षी जीवातिरेकेण व्यवह्रियते । अत्रोक्तं कूटस्थदीपे देहद्वयाधिष्ठानभूतं कूटस्थचैतन्यं स्वावच्छेदकस्य देहद्वयस्य साक्षादीक्षणा ¶-

---

* प्रत्यक्षवृत्तीनामेव स्वसमानाधिकरणाज्ञानसकलावस्थानिवर्तकत्वमभ्युपगम्यतइति भावः ।

† अन्तःकरणोपहितसाक्ष्यसंसर्गेति द्वा· १ पुस्तकयोः । ‡ इदं पूर्वान्वयि ।

§ सत्तानिश्चयरूपायाः परोक्षवृत्तेः दूरत्वासंनिकर्षादिप्रयुक्तत्वस्याननुभवेन तत्साजात्यादपरोक्षत्वभ्रम इति भावः । || निवृत्तीति ४ पु· नास्ति ।

¶ अपरोक्षतया द्रष्टृत्वात् ।

न्निर्विकारत्वा * च्च साक्षीत्युच्यते । लोकेपि ह्यौदासीन्यबोधाभ्यामेव साक्षित्वं सिद्धम् । यद्यपि जीवस्य वृत्तयः सन्ति देहद्वयभासिकास्तथापि सर्वतः प्रसृतेन स्वावच्छिन्नेन कूटस्थचैतन्येन ईषत्सदा भास्यमेव † देहद्वयं जीवस्वरूप-चैतन्यप्रतिबिम्बगर्भान्तःकरणाद्विच्छिद्य विच्छिद्यो ‡ द्गच्छद्भिर्वृत्तिज्ञानैर्भास्यते अन्तरालकाले तु सह वृत्त्यभावैः कूटस्थचैतन्येनैव भास्यते । अत एवाहंकारादीनां सर्वदा प्रकाशसंसर्गात्संशयाद्यगोचरत्वम् । अन्यज्ञानधाराकालीनाहंकारस्यैतावन्तं कालमिदमहं पश्यन्नेवाऽऽसमित्यनुसंधानं च । न च कूटस्थ-प्रकाशिते कथं जीवस्य व्यवहारस्मृत्यादिकमिति शङ्क्यम् । अन्योन्याध्यासेन जीवैकत्वापत्त्या कूटस्थस्य जीवान्तरङ्गत्वात् । न च जीवचैतन्यमेव साक्षी भवतु किं कूटस्थेनेति वाच्यम् । लौकिकवैदिकव्यवहारकर्तुस्तस्यौदासीनद्र-ष्टृत्वासंभवेन साक्षी चेता केवलो निर्गुणश्चेति श्रुत्युक्तसाक्षित्वायोगात् । त-योरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीतीति कर्मफलभोक्तुर्जीवादु-दासीनप्रकाशरूपसाक्षिणः पृथगाम्नानाच्चेति । नाटकदीपे ऽपि नृत्यशालास्थि-तदीपदृष्टान्तेन साक्षी जीवाद्विविच्य दर्शितः । तथा हि नृत्यशालास्थितो दीपः प्रभुं सभ्यांश्च नर्त्तकीम् दीपयेद्विशेषेण तदभावेपि दीप्यते । तथा चिदा-भासविशिष्टाहंकाररूपं जीवं विषयभोगसाकल्यवैकल्याभिमानप्रयुक्तहर्षविषाद-वत्त्वान्नृत्याभिमानिप्रभुतुल्यं तत्परिसरवर्त्तित्वेपि § तद्राहित्यात्सभ्यपुरुषतुल्या-न्विषयान्नानाविधविकारवर्त्तित्वा ‖ न्नर्त्तकीतुल्यां धियं च दीपयन्सुषुप्त्यादावहं-काराद्यभावेपि दीप्यमानश्चिदाभासविशिष्टाहंकाररूपजीवभ्रमाधिष्ठानकूटस्थचै-तन्यात्मा साक्षी । एवं जीवाद्विवेचितो ऽयं साक्षी न ब्रह्मकोटिरपि । किं त्वस्पृष्टजीवेश्वरविभागं चैतन्यमित्युक्तं कूटस्थदीपे ॥

तत्त्वप्रदीपिकायामपि मायाशबलिते सगुणे परमेश्वरे केवलो निर्गुण इति विशेषणानुपपत्तेः सर्वप्रत्यग्भूतं ¶ विशुद्धं ब्रह्म जीवाभेदेन साक्षीति प्रतिपाद्यतइति विदितम् ।

---

* प्रकाशमानत्वात्तावन्मात्रेणापि सविता प्रकाशतइतिवत्प्रकाशकत्वव्यवहारोपपत्तेः ।

† स्वावच्छेदकीभविष्यदन्तःकरणादिपुरस्कारेण प्रकाशितमिति भावः ।

‡ जाग्रदवस्थाया देहद्वयस्य साक्षिचैतन्यमात्रादस्पष्टतया भावावसरं दर्शयितुं विच्छिद्यवि-च्छिद्येत्युक्तम् । टी॰ § जीवसंनिकृष्टत्वेपि जीवान्तरङ्गत्वाभावादित्यर्थः ।

‖ विकारान्नर्तकीति द्रा॰ पुस्तके ।

¶ सर्वेषां जीवानां प्रत्यग्भूतमधिष्ठानतया ऽऽन्तरम् । टी॰

कौमुद्यां त्वेको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्चेति देवत्वादिश्रुतेः परमेश्वरस्यैव रूपभेदः कश्चिज्जीवप्रवृत्तिनिवृत्त्योरनुमन्ता स्वयमुदासीनः* साक्षी नाम । स च कारणत्वादिधर्मानास्पदत्वादपरोक्षो जीवगतमज्ञानाद्यवभासयंश्च जीवस्यान्तरङ्गः सुषुप्त्यादौ च कार्यकारणोपरमे जीवगताऽज्ञानमात्रव्यञ्जकः प्राज्ञशब्दितः । तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किं चन वेद नान्तरं प्राज्ञेनात्मना ऽन्वारूढ उत्सर्जन्यातीति † श्रुतिवाक्याभ्यां सुषुप्त्युत्क्रान्त्यवस्थयोर्जीवभेदेन प्रतिपादितः परमेश्वर इति सुषुप्त्युत्क्रान्त्यधिकरणनिर्णयेपि साक्षिपर इत्युपवर्णितम् ॥

तत्त्वशुद्धावपि यथेदं रजतमिति भ्रमस्थले वस्तुतः शुक्तिकोट्यन्तर्गतोपीदमंशः प्रतिभासतो ‡ रजतकोटिः तथा ब्रह्मकोटिरेव साक्षी प्रतिभासतो जीवकोटिरिति जीवस्य सुखादिव्यवहारे तस्योपयोग इत्युक्त्वा ऽयमेव पक्षः समर्थितः ॥

केचित्त्वविद्योपाधिको जीव एव साक्षाद्द्रष्टृत्वात्साक्षी लोके ऽपि ह्यकर्तृत्वे सति द्रष्टृत्वं साक्षित्वं प्रसिद्धम् । तच्चाऽसङ्गोदासीनप्रकाशरूपे जीवएव साक्षात्संभवति जीवस्यान्तःकरणतादात्म्यापत्त्या कर्तृत्वाद्यारोपभाक्त्वेपि स्वयमुदासीनत्वात् । एको देव इति मन्त्रस्तु ब्रह्मणो जीवभावाभिप्रायेण साक्षित्वप्रतिपादकः । द्वा सुपर्णेति मन्त्रो गुहाधिकरणन्यायेन जीवेश्वरोभयपरः । गुहाधिकरणभाष्योदाहृतपैङ्गिरहस्यब्राह्मणव्याख्यातेन प्रकारेण जीवान्तःकरणोभयपरो वेति न कश्चिद्विरोध इत्याहुः ॥

अन्ये तु सत्यं जीव एव साक्षी न तु सर्वगतेनाविद्योपहितेन रूपेण पुरुषान्तरान्तःकरणादीनामपि पुरुषान्तरं प्रति स्वान्तःकरणभासकसाक्षिसंसर्गाऽविशेषेण प्रत्यक्षत्वापत्तेः । न चान्तःकरणभेदेन प्रमातृभेदात् तदनापत्तिः । साक्षिभास्ये ऽन्तःकरणादौ सर्वत्र साक्ष्यभेदे सति प्रमातृभेदस्याप्रयो-

* अनुमन्ता नैरन्तर्येण बोद्धा जीवे व्यापारवत्यपि स्वयं तद्रहितः । टी॰
† वेदनावशाच्छब्दं कुर्वन् याति शरीराद् बहिर्गच्छति उत्क्रामतीत्यर्थः । टी॰
‡ प्रतिभासमात्रेणेत्यर्थः ।

जकत्वात् । तस्मादन्तःकरणोपधानेन जीवः साक्षी । तथा च प्रतिपुरुषं साक्षिभेदात्पुरुषान्तरान्तःकरणादेः पुरुषान्तरसाक्ष्यसंसर्गाद्वा तदयोग्यत्वाद्वा ऽप्रकाश उपपद्यते । सुषुप्तावपि सूक्ष्मरूपेणा * न्तःकरणसद्भावात्तदुपहितः साक्षी तदाप्यस्त्येव । न चान्तःकरणोपहितस्य प्रमातृत्वेन न तस्य साक्षित्वम् सुषुप्तौ प्रमातृऽभावेपि साक्षिसत्त्वेन तयोर्भेदश्चावश्यं वक्तव्य इति वाच्यम् । विशेषणोपाध्योर्भेदस्य सिद्धान्तसंमतत्वेनान्तःकरणविशिष्टः प्रमाता तदुपहितः साक्षीतिभेदोपपत्तेरित्याहुः ॥

१५) ननूक्तरूपस्य साक्षिणश्चैतन्यमात्रावरकेणाज्ञानेनावरणमवर्ज्जनीयमिति कथमावृतेनाविद्याहंकारादिभानमिति चेत् राहुवदविद्या स्वावृतप्रकाश † प्रकाश्येति के चित् ॥

वस्तुतो ऽविद्यान्तःकरणतद्धर्मावभासकं साक्षिचैतन्यं विहायैवाज्ञानं चैतन्यमावृणोतीत्यनुभवानुसारेण कल्पनान्न कश्चित् दोषः । अत एव सर्वदा तेषा ‡ मनावृतप्रकाशसंसर्गादज्ञानविपरीतज्ञानसंशयाऽगोचरत्वम् । साक्षिचैतन्यस्यानावृतत्वे तत्स्वरूपभूतस्यानन्दस्यापि प्रकाशापत्तिरिति चेन्न इष्टापत्तेः । आनन्दरूपप्रकाशप्रयुक्तस्यात्मनि निरुपाधिकप्रेम्णो दर्शनात् भासत एव परमप्रेमास्पदत्वलक्षणं सुखमिति विवरणाच्च ॥

१६) स्यादेतत् इदानीमप्यानन्दप्रकाशे मुक्तिसंसारयोरविशेषप्रसङ्गः । ननु कल्पितभेदस्य साक्ष्यानन्दस्य प्रकाशेप्यनवच्छिन्नस्य ब्रह्मानन्दस्यावृतस्य संसारदशायामप्रकाशेन विशेषोस्तीति चेद् न । आनन्दे ऽनवच्छेदांशस्या § पुरुषार्थत्वात् आनन्दापरोक्षमात्रस्य चेदानीमपि सत्त्वात् । नन्ववच्छिन्नसाक्ष्यानन्दः सातिशयः सुषुप्तिसाधारणादनतिस्पष्टः ‖ ततो वैषयिकानन्देष्वतिशयानुभवात् । अनवच्छिन्नो ब्रह्मानन्दस्तु निरतिशयः आनन्दवल्ल्यां मानुषानन्दाद्युत्तरोत्तरशतगुणोत्कर्षोपवर्णनस्य ब्रह्मानन्दे समापनादिति चेद् न । सिद्धान्ते साक्ष्यानन्दविषयानन्दब्रह्मानन्दानां वस्तुत एकत्वेनोत्कर्षापकर्षासंभवात् ¶ । मानुषानन्दादीनामुत्तरोत्तरमुत्कर्षं श्रुतिर्वदतीति चेत् को वा

* संस्काररूपेणेत्यर्थः ।

† यथा राहुः स्वयमप्रकाशमानोऽपि स्वाच्छादितचन्द्रप्रकाशेन प्रकाश्यते तद्वदित्यर्थः ।

‡ अन्तःकरणतद्धर्मादीनाम् । § तात्कालिकविषयताशून्यात् ।

‖ अनवच्छिन्नांशस्येति ४ पु॰ पाठः ।

¶ उत्कर्षापकर्षयोर्जातिविशेषरूपयोरेकस्यां व्यक्तावसंभवादित्यर्थः ।

प्रति श्रुतिर्न वदतीति किं त्वद्वैतवादे तदुपपादनमशक्यमित्युच्यते । नन्वेकस्यैव सौरालोकस्य करतलस्फटिकदर्पणाद्यभिव्यञ्जकविशेषोपधानेनाभिव्यक्तितारतम्यदर्शनादेकत्वे ऽप्यानन्दस्याभिव्यञ्जकसुखवृत्तिभेदोपधानेनाभिव्यक्तितारतम्यरूपमुत्कर्षापकर्षवत्त्वं युक्तमिति चेद् न । दृष्टान्तासंप्रतिपत्तेः । सर्वतः प्रसृमरस्य सौरालोकस्य गगने विना करतलादिसंबन्धमस्पष्टं प्रकाशमानस्य निम्नतले प्रसृमरस्य जलस्येव करतलसंबन्धेन गतिप्रतिहतौ बहुलीभावादधिकप्रकाशः भास्वरदर्पणादिसंबन्धेन गतिप्रतिहतौ बहुलीभावात्तदीयदीप्तिसंवलनाच्च ततो ऽप्यधिकप्रकाश इति तत्राभिव्यञ्जकोपाधिकाभिव्यक्तितारतम्यानभ्युपगमात् । दृष्टान्तसंप्रतिपत्तौ च गगनप्रसृतसौरालोकव * दनवच्छिन्नानन्दस्यास्पष्टता करतलाद्यवच्छिन्नसौरालोकवत्सुखवृत्त्यवच्छिन्नानन्दस्याधिकाभिव्यक्तिरिति मुक्तितः संसारस्यैवाभ्यर्हितत्वापत्तेश्च । एतेन संसारदशायां प्रकाशमानो ऽप्यानन्दो मिथ्याज्ञानतत्संस्कारविक्षिप्ततया तीव्रवायुविक्षिप्तदीपप्रभावन्न स्पष्टं प्रकाशते मुक्तौ तदभावात् यथावदवभासते इत्यपि निरस्तम् । निर्विशेषस्वरूपानन्दे प्रकाशमाने तत्र विक्षेपदोषादप्रकाशमानस्य मुक्त्यन्वयिनोऽतिशयस्या † संभवात् । तस्मात्साक्ष्यानन्दस्यानावृतत्वकल्पनमयुक्तम् ॥

अत्राहुरद्वैतविद्याचार्याः । यथा ऽत्युत्कृष्टस्यैकस्यैव धवलरूपस्य मालिन्यतारतम्ययुक्तेष्वनेकेषु दर्पणेषु प्रतिबिम्बे सत्युपाधिमालिन्यतारतम्यात्तत्र तत्र प्रतिबिम्बे धावल्यापकर्षस्तारतम्येनाध्यस्यते एवं वस्तुतो निरतिशयस्यैकस्यैव स्वरूपानन्दस्यान्तःकरणप्रतिबिम्बिततया साक्ष्यानन्दभावे प्राक्तनसुकृतसंपत्त्यधीनविषयविशेषसंपर्कप्रयुक्तसत्त्वोत्कर्षापकर्षरूपशुद्धितारतम्ययुक्तसुखरूपान्तःकरणवृत्तिप्रतिबिम्बिततया विषयानन्दभावे च तमोगुणरूपोपाधिमालिन्यतारतम्यदोषादपकर्षस्तारतम्येनाध्यस्यत इति संसारदशायां प्रकाशमाने ऽप्यानन्दे ऽध्यस्तापकर्षतारतम्येन सातिशयत्वादतृप्तिः विद्योदये निखिलापकर्षाध्यासनिवृत्तेरारोपितसातिशयत्वापायात्कृतकृत्यतेति विशेषोपपत्तेर्निरुपाधिकप्रेमगोचरतया प्रकाशमानः साक्ष्यानन्दो ऽनावृत एवेति ॥

* वत्तदनवेति द्रा· पुस्तकपाठः ।

† दृष्टान्तस्थावयवरूपस्य जातिविशेषरूपस्य वेत्यर्थः ।

अन्ये तु प्रकाशमानो ऽप्यानन्दो नास्ति न प्रकाशतइत्यावरणानुभवादावृत एव । एकस्मिन्नपि साक्षिण्यविद्याकल्पितरूपभेदसंभवेन चैतन्यरूपेणानावरणस्यानन्दरूपेणावरणस्य चाविरोधात् । स्वरूपप्रकाशस्या * वरणानिवर्तकतया प्रकाशमाने आवरणस्याविरोधाच्च । त्वदुक्तमर्थं न जानामीति प्रकाशमानएवावरणदर्शनात् । न च तत्रानावृतसामान्याकारावच्छेदेन विशेषावरणमेवानुभूयतइति वाच्यम् । अन्यावरणस्यान्यावच्छेदेन भाने ऽतिप्रसङ्गात् । न च सामान्यविशेषभावो नियामक इति नातिप्रसङ्ग इति वाच्यम् । व्याप्यव्यापकभावातिरिक्तसामान्यविशेषभावाभावेन वह्निं न जानामीति धूमावरकाज्ञानानुभवप्रसङ्गात् । तस्माद्यदवच्छिन्नमज्ञानं प्रकाशते तदेवावृतमिति प्रकाशमाने ऽप्यज्ञानं युज्यते । अज्ञानं च यथा साक्ष्यंशं विहाय चैतन्यमावृणोति एवमानन्दमपि तत्तत्सुखरूपवृत्तिकबलीकृतं विहायैवावृणोति स एष † वैषयिकानन्दस्यावरणाभिभवः । स चावरणाभिभवः प्रत्यूषसमये बाह्यावरणाभिभववत् कारणविशेषप्रयुक्तवृत्तिविशेषवशात्तरतमभावेन भवति । अतः स्वरूपानन्दविषयानन्दयोर्विषयानन्दानां च परस्परभेदसिद्धिरिति वदन्ति । सर्वथापि साक्षिचैतन्यस्यानावृतत्वादावरणाभिभवार्थं वृत्तिमनपेक्ष्यैव तेनाहंकारादिप्रकाशनमिति तुल्यमेव ॥

(१७) नन्वेवं कथमहंकारादीनामनुसन्धानं ज्ञानसूक्ष्मावस्थारूपस्य संस्कारस्य ज्ञाने सत्यऽयोगेन नित्येन साक्षिणा तदाधानासंभवात् । अत्र के चिदाहुः । स्वसंसृष्टेन साक्षिणा सदा भास्यमानोहंकारस्तत्तद्घटादिविषयवृत्त्या ‡ कारपरिणतस्वावच्छिन्नेनापि साक्षिणा भास्यतइति तस्या § ऽनित्यत्वात्संभवति संस्काराधानं घटादौ विषयइव । न हि स्वाकारवृत्त्यवच्छिन्नसाक्षिणैव स्वगोचरसंस्काराधानमिति नियमोस्ति । तथा सति वृत्तिगोचरसंस्कारासंभवेन वृत्तेरस्मरणप्रसङ्गात् । अनवस्थापत्त्या वृत्तिगोचरवृत्त्यन्तरस्यानुव्यवसायनिरासेन निरस्तत्वात् । किं तु यद्वृत्त्यवच्छिन्नचैतन्येन यत्प्रकाशते तद्वृत्त्या तद्गोचरसंस्काराधानमित्येव नियमः । एवं च ज्ञानसुखादयो ऽप्यन्तःकरणवृत्तयस्तप्रायः

---

* आगन्तुकवृत्तिरूपप्रकाशस्यावरणविरोधित्वकल्पनात्र स्वरूपप्रकाशस्तद्विरोधीति भावः ।

† सुखवृत्तिविषयत्वप्रयुक्तानावरकत्वस्वभाव एव वृत्तिकृतावरणाभिभव इत्यर्थः ।

‡ वृत्त्याकारेण परिणते यत्स्वमहंकारस्तदवच्छिन्नेनेत्यर्थः ।

§ घटादिगोचरवृत्त्यवच्छिन्नसाक्षिचैतन्यस्य ।

पिण्डाद्युच्चरन्तो विस्फुलिङ्गा इव स्वावच्छिन्नेन वह्निनेव स्वस्वावच्छिन्नेनानि-
येन साक्षिणा भास्यन्तइति युक्तं तेष्वपि संस्काराधानम् । यस्तु घटैकाकार-
ीस्था चिद् घटमेवा * वभासयेत् घटस्य ज्ञातता † ब्रह्मचैतन्येनावभास्यते
ति कूटस्थदीपोक्तो विषयविशेषणस्य ज्ञानस्य विषयावच्छिन्नब्रह्मचैतन्याव-
ास्यत्वपक्षः यश्च तत्त्वप्रदीपिकोक्तो ज्ञानेच्छादीनामनवच्छिन्नशुद्धचैतन्यरू-
नित्यसाक्षिभास्यत्वपक्षस्तयोरपि चैतन्यस्य स्वसंसृष्टापरोक्षरूपत्वाद्वृत्तिसंस-
ावश्यं वाच्य इति तत्संसृष्टानित्यरूपसद्भावा ‡ न्न तेषु संस्काराधाने का
दनुपपत्तिरिति ॥

अन्ये तु सुषुप्तावविद्याद्यनुसन्धानसिद्धये कल्पितामविद्यावृत्तिमहमा-
ारामङ्गीकृत्याहमर्थे संस्कारमुपपादयन्ति । न चास्मिन्पक्षे एतावन्तं कालमि-
महं पश्यन्नेवासमित्यन्य § ज्ञानधाराकालीनाहमर्थानुसन्धानानुपपत्तिः । अव-
ेदकभेदेन सुखदुःखयोगपद्यवद्वृत्तिद्वययोगपद्यस्याप्यविरोधेनान्यज्ञानधारा-
ाले ऽप्यहमाकाराऽविद्यावृत्तिसंतानसंभवादिति ॥

अपरे तु अहमाकारा वृत्तिरन्तःकरणवृत्तिरेव किं तूपासनादिवृत्ति-
न्न ज्ञानं क्लृप्तत्कारणाजन्यत्वात् । न हि तत्र चक्षुरादिप्रत्यक्षलक्षणं संभ-
ति । न वा लिङ्गादिकं लिङ्गादिप्रतिसन्धानशून्यस्याप्यहंकारानुसन्धानदर्श-
त् । नापि मनः करणं तस्योपादानभूतस्य क्व चिदपि करणत्वाक्लृप्तेः ।
ह्यहमर्थप्रत्यभिज्ञापि ज्ञानं न स्यादिति चेन्न । तस्याऽहमंशे ज्ञानत्वाभावेपि
ांशे स्मृतिकरणत्वेन क्लृप्तसंस्कारजन्यतया ज्ञानत्वात् । अंशभेदेन ज्ञाने ||
ोक्षत्वापरोक्षत्ववत् प्रमात्वाप्रमात्ववच्च ज्ञानत्वाज्ञानत्वयोरपि अविरोधा-
त्याहुः ॥

इतरे त्वहमाकारापि वृत्तिर्ज्ञानमेव मामहं जानामीत्यनुभवात् । न
करणासंभवः अनुभवानुसारेण मनस एवान्तरिन्द्रियस्य करणत्वस्यापि क-
नादित्याहुः ॥

---

* घटमेव प्रकाशयेदिति द्वा० पाठः । घटमेव न घटस्य ज्ञाततामपीत्येवकारार्थः ।
† विषयतासंबन्धेन विषयनिष्ठं ज्ञानमित्यर्थः । टी०
‡ तत्संसृष्टस्य वृत्तिसंसृष्टस्यात् एवानित्यस्यावच्छिन्नस्य रूपस्य सद्भावादिति भावः ।
§ घटादिविषयकज्ञानधाराकालीनेत्यर्थः ।
|| वृत्तावित्यर्थः ।

(१८) एवं सति बाह्य * विषयापरोक्षवृत्तीनामेवावरणाभिभावकत्वनियमः पर्यवसन्नः । ननु नायमपि नियमः शुक्तिरजतस्थले इदमाकारवृत्तेरज्ञानानभिभावकत्वात् । अन्यथोपादानाभावेन रजतोत्पत्त्ययोगादिति चेत् अत्राहुः । इदमाकारवृत्त्येदमंशाज्ञाननिवृत्तावपि शुक्तित्वादिविशेषांशाज्ञानानिवृत्तेस्तदेव रजतोपादानं शुक्तित्वाद्यज्ञाने रजताध्यासस्य तज्ज्ञाने तदभावस्यानुभूयमानत्वात् । अध्यासभाष्यटीकाविवरणे ऽनुभूयमानान्वयव्यतिरेकस्यैवाज्ञानस्य रजताद्यध्यासोपादानत्वोक्तेः । अत एव शुक्त्यं † शोधिष्ठानम् इदमंश आधारः सविलासा ‡ ज्ञानविषयो ऽधिष्ठानम् अतद्रूपोपि तद्रूपेणारोप्यबुद्धौ स्फुरन्नाधार इति संक्षेपशारीरके विवेचनादिति ॥

अपरे त्विदं रजतमितीदमंशसंभिन्नत्वेन प्रतीयमानस्य रजतस्येदमंशाज्ञानमेवोपादानं तस्य चेदमाकारवृत्त्या ऽऽवरणशक्तिमात्रनिवृत्तावपि विक्षेपशक्त्या सह तद § नुवृत्तेर्नोपादानत्वासंभवः । जलप्रतिबिम्बितवृक्षाधोग्रत्वाध्यासे जीवन्मुक्त्या ऽनुवृत्तप्रपञ्चाध्यासे च सर्वात्मनाधिष्ठानसाक्षात्कारानन्तरभाविन्यामावरण ‖ निवृत्तावपि विक्षेपशक्तिसहिताज्ञानमात्रस्योपादानत्वसंप्रतिपत्तेरित्याहुः ॥

कवितार्किकचक्रवर्त्तिनृसिंहभट्टोपाध्यायास्त्विदं रजतमितिभ्रमरूपवृत्तिंव्यतिरेकेण रजतोत्पत्तेः प्रागिदमाकारा वृत्तिरेव नास्तीति तस्या अज्ञाननिवर्त्तकत्वसदसद्भावविचारं निरालम्बनं मन्यन्ते । तथा हि । न तावद् भ्रमरूपवृत्तिव्यतिरेकेणेदमाकारा वृत्तिरनुभवसिद्धा ज्ञानद्वित्वाऽननुभवात् । नाप्यधिष्ठानसामान्यज्ञानमध्यासकारणमिति कार्यकल्प्या तस्यास्तत्कारणत्वे मानाभावात् । न चाधिष्ठानसंप्रयोगाभावे रजताद्यनुत्पत्तिस्तत्र मानं ततो दुष्टेन्द्रियसंप्रयोगस्यैवाध्यासकारणत्वप्राप्तेः । न च संप्रयोगो न सर्वत्र भ्रमव्यापी अधिष्ठानस्फुरणं तु स्वतःप्रकाशमाने प्रत्यगात्मन्यहंकाराद्यध्यासमपि व्याप्नोतीति वाच्यम् । तस्यापि घटाद्यध्यासाव्यापित्वात् । घटादिप्रत्यक्षात्प्राक्तदधिष्ठान-

---

* ब्रह्मागोचरेति द्वा॰ पाठः ।

† शुक्तित्वविशेषरूपेण पुरोवर्त्यवच्छिन्नचैतन्यमित्यर्थः । टी॰ शुक्तित्वाज्ञानमिति यावत् ।

‡ आधाराधिष्ठानयोर्भेदं दर्शयति । सविलासेति । विलासो रजतादिविक्षेपः । विषयत्वमावृतत्वम् । अध्यस्तरजताद्यभेदरहितोपि तदभिन्नत्वेन स्फुरन्नित्यर्थः । टी॰

§ तदनुवृत्तेः अज्ञानानुवृत्तेः । ‖ भाविन्यावरणेति ३ पु॰ पाठः ।

भूतनीरूपब्रह्ममात्रगोचरचाक्षुषवृत्त्यसंभवात् । स्वरूपप्रकाशस्यावृतत्वात् । आवृताऽनावृतसाधारण्येनाधिष्ठानप्रकाशमात्र * स्याध्यासकारणत्वे शुक्तीदमंशसंयोगात्प्रागपि तदवच्छिन्नचैतन्यस्वरूपप्रकाशस्यावृतस्य सद्भावेन तदाऽप्यध्यासापत्तेः । न चाध्याससामान्येऽधिष्ठानप्रकाशसामान्यं हेतुः प्रातिभासिकाध्यासेऽभिव्यक्ताधिष्ठानप्रकाश इति नाऽतिप्रसङ्गः सामान्ये सामान्यस्य विशेषे विशेषस्य हेतुत्वौचित्यादिति वाच्यम् । एवमपि प्रातिभासिकशङ्खपीतिमकूपजलनैल्याद्यध्यासाव्यापनात् । रूपानुपहितचाक्षुषप्रत्यययायोगेन तदानीं शङ्खादिगतशौक्ल्योपलम्भाभावेन † चाध्यासात्प्राक् शङ्खादिनीरूपाधिष्ठानगोचरवृत्त्यसंभवात् । न च प्रातिभासिकेष्वपि रजताध्यासमात्रे निरुक्तो ‡ विशेषहेतुरास्तामिति वाच्यम् । तथा सति संप्रयोगात्प्राक् पीतशङ्खाद्यध्यासाऽप्रसङ्गाय तदध्यासे दुष्टेन्द्रियसंप्रयोगः कारणमित्यवश्यं वक्तव्यतया तस्यैव सामान्यतः प्रातिभासिकाध्यासमात्रे लाघवात्कारणत्वसिद्धौ तत एव रजताध्यासकादाचित्कत्वस्यापि निर्वाहादधिष्ठानप्रकाशस्य सामान्यतो विशेषतो वाऽध्यासकारणत्वस्यासिद्धेः । ननु च सादृश्यनिरपेक्षेऽध्यासान्तरेऽकारणत्वेऽपि तत्सापेक्षे रजताद्यध्यासे रजतादिसादृश्यभूतरूपविशेषादिविशिष्टधर्मिज्ञानरूपमधिष्ठानसामान्यज्ञानं कारणमवश्यं वाच्यम् दुष्टेन्द्रियसंप्रयोगमात्रस्य कारणत्वे शुक्तिवदिङ्गालेऽपि तद्रजताध्यासप्रसङ्गात् । न च सादृश्यमपि विषयदोषत्वेन कारणमिति वाच्यम् । विसदृशेऽपि सादृश्यभ्रमे सत्यध्याससद्भावात् जलधिसलिलपूरे दूरे नीलशिला § रोपदर्शनात् । न च तद्धेतोरेवेति ‖ न्यायात्सादृश्यज्ञानसामग्र्येवाध्यासकारणमस्त्विति युक्तम् । ज्ञानसामग्र्या अर्थकारणत्वस्य क्व चिदप्यदृष्टेः । ततः सादृश्यज्ञानत्वस्यैव लघुत्वाच्च । न च स्वतःशुभ्रेऽपि शुभ्रकलधौतभृङ्गारगतेऽपि स्वच्छे जले एव नैल्याध्यासः न मुक्ताफले इतिव्यवस्थावद्वस्तुस्वभावादेव शुक्तौ रजताध्यासो नेङ्गालादाविति व्यवस्था न तु सादृश्यज्ञानापेक्षणादिति वाच्यम् । स्वतः पटखण्डे पुण्डरीकमुकुल-

* अनभिव्यक्तस्यापीति भावः ।

† तत्सत्त्वेऽध्यासस्यैवानुपपत्तेरिति भावः । अध्यासात्प्रागध्यस्तपीतिमरहितस्याध्य सप्रतिबन्धकवृत्तिविषयशौक्ल्यरहितस्य चाधिष्ठानस्य ज्ञानासंभवादिति भावः ।

‡ अभिव्यक्ताधिष्ठानप्रकाश इत्यर्थः । टी॰

§ शिलातलस्वाध्यारोपेति द्वा॰ पुस्तके शिलास्वाध्यारोपेति १ पुस्तके ।

‖ तद्धेतोरेवास्तु तद्धेतुत्वं मध्ये तु किं तेनेति न्यायादित्यर्थः । टी॰

स्थानध्यासेऽपि तत्रैव कर्त्तनादिघटिततदाकारे तदध्यासदर्शनेन तदध्यासस्य वस्तुस्वभावमननुरुध्य सादृश्यज्ञानभावाभावानुरोधित्वनिश्चयात् । अन्यथाऽन्यदापि तत्र तदध्यासप्रसङ्गात् । उच्यते । सादृश्यज्ञानस्याध्यासकारणत्ववादेऽपि विशेषदर्शनप्रतिबध्येषु रजताद्यध्यासेष्वेव तस्य कारणत्वं वाच्यं न तु तदप्रतिबध्येषु पीतशङ्खाद्यध्यासेषु असंभवात् । विशेषदर्शनप्रतिबध्येषु च प्रतिबन्धकज्ञानसामग्र्याः * प्रतिबन्धकत्वनियमेन विशेषदर्शनसामग्र्यवश्यं प्रतिबन्धिका वाच्येति तत एव सर्वव्यवस्थोपपत्तेः किं सादृश्यज्ञानस्य कारणत्वकल्पनया । तथा हि । इङ्गालादौ चक्षुस्संप्रयुक्ते तदीयनैल्यादिरूपविशेषदर्शनसामग्री † सत्त्वान्न रजताध्यासः । शुक्त्यादावपि नीलभागादिव्यापिचक्षुःसंप्रयोगे तत्सत्त्वान्न तदध्यासः सदृशभागमात्रसंप्रयोगे तदभावादध्यासः । तदापि शुक्तित्वरूपविशेषदर्शनसामग्रीसत्त्वादनध्यासप्रसङ्ग इति चेन्न । अध्याससमये शुक्तित्वदर्शनाभावेन तत्पूर्वं तत्सामग्र्यभावस्य त्वयापि वाच्यत्वात् । मम सादृश्यज्ञानरूपाध्यासकारणदोषेण प्रतिबन्धात्तदा शुक्तित्वदर्शनसामग्र्यभावाभ्युपगमः । तव तथाभ्युपगमे तु घट्टकुटीप्रभातवृत्तान्त ‡ इति चेद् न । समीपोपसर्पणाऽनन्तरं रजतसादृश्यरूपे चाकचिक्ये दृश्यमानएव शुक्तित्वोपलम्भेन तस्य तत्सामग्रीप्रतिबन्धकत्वासिद्धौ दूरत्वादिदोषेण प्रतिबन्धाद्वा व्यञ्जकनीलपृष्ठत्वादिग्राहकाऽसमवधानाद्वा तत्सामग्र्यभावस्य वक्तव्यत्वात् । एवं जलधिजले नियतनीलरूपाध्यासप्रयोजकदोषेण दूरे नीरत्वव्यञ्जकतरङ्गादिग्राहकासमवधानेन च शैत्यजलराशित्वादिविशेषदर्शनसामग्र्यभावाच्छिलातलत्वाद्यध्यासः । विस्तृते पटे परिणाहरूपविशेषदर्शनसामग्रीसत्त्वान्न पुण्डरीकमुकुलत्वाध्यासः कर्त्तनादिघटिततदाकारे तदभावात्तदध्यास इति । नन्वेवं करस्पृष्टे लोहशकले तदीयनीलरूपविशेषदर्शनसामग्र्यभावाद्रजताध्यासः किं न भवेत्सादृश्यज्ञानानपेक्षणादिति चेद् भवत्येव किं तु ताम्रादिव्यावर्त्तकविशेषदर्शनसामग्र्या

* प्रतिबन्धकसामग्र्याः प्रतिबन्धकत्वे दाहप्रतिबन्धकमण्याद्युदिसामग्र्या दाहप्रतिबन्धकत्वप्रसङ्गः । तद्वारणाय ज्ञानपदम् । टी॰ प्रातिभासिकरजतस्य ज्ञानोपादानकत्वाद्विशेषदर्शनस्य तत्कारणप्रतिबन्धकत्वेन कार्यभूतप्रातिभासिकरजतप्रतिबन्धकत्वं सुतरामिति भावः ।

† तदभावव्याप्यवत्तानिश्चयघटितसामग्रीसत्त्वादित्यर्थः ।

‡ कश्चन सायं घट्टमागत्य शौल्किकाय शुल्कं दातुमनिच्छन् सर्वां रात्रिं भ्रान्त्वा प्रभाते तत्रैवागत इति न्यायाकारः ।

ऽप्यभावात्तदध्यासेनापि भाव्यमिति क्व चिदनेकाध्यासे * संशयगोचरो भवति क्व चित्तु रजतप्राये † कोशगृहादौ रजताध्यास एव भवति क्व चित्सत्यपि सादृश्यज्ञाने शुक्तिकादौ कदा चित्करणदोषाद्यभावेनाध्यासानुदयवदध्यासानुदये ऽपि न हानिः । तस्मान्न कार्यकल्प्येदमाकारवृत्तिर्नाप्यप्रतिबद्धेदमर्थसंप्रयोगकारणकल्प्या । ततो भवन्त्या एवेदंवृत्तेर्दुष्टेन्द्रियसंप्रयोग ‡ क्षुभिताऽविद्यापरिणामस्वसमानकालरजतविषयत्वस्याप्यस्माभिरुच्यमानत्वात् । तत्र च ज्ञानसमानकालोत्पत्तिके प्रतिभासमात्रविपरिवर्तिनि रजते तत्प्राचीनसंप्रयोगाभावेपि तत्तादात्म्याश्रयेदमर्थसंप्रयोगादेव तस्यापि चक्षुर्ग्राह्यत्वोपपत्तेः । चक्षुषा रजतं पश्यामीति प्रातिभासिकरजतस्य स्वसंप्रयोगाभावेपि चाक्षुषत्वानुभवात् । न च स्वसंप्रयोगाभावादेव बाधकान्न तच्चाक्षुषं नापि दुष्टेन्द्रियसंप्रयोगजन्यमिदंवृत्तिसमकालं ज्ञानकारणस्येन्द्रियसंप्रयोगस्यार्थकारणत्वाऽक्लृप्तेः किं त्विदंवृत्त्यनन्तरभावि तज्जन्यं तदभिव्यक्तसाक्षिण्यध्यासात् तद्ग्राह्यं चाक्षुषत्वानुभवस्तु स्वभासकचैतन्याभिव्यञ्जकेदंवृत्तिजनकत्वेन परंपरया चक्षुरपेक्षामात्रेणेति वाच्यम् । तथा सति पीतशङ्खभ्रमे चक्षुरनपेक्षाप्रसङ्गात् । न हि तत्र शङ्खग्रहणे चक्षुरपेक्षा रूपं विना केवलशङ्खस्य चक्षुर्ग्राह्यत्वायोगात् । नापि पीतिमग्रहणे आरोप्ये ऐन्द्रियकत्वाऽनभ्युपगमात् § । न च पीतिमा स्वरूपतो नाध्यस्यते किं तु नयनगतपित्तपीतिम्नो ऽनुभूयमानस्य शङ्खसंसर्गमात्रमध्यस्यतइति पीतिमानुभवार्थमेव चक्षुरपेक्षेति वाच्यम् । तथा सति शङ्खतत्संसर्गयोरप्रत्यक्षत्वप्रसङ्गात् । नयनप्रदेशगतपित्तपीतिमाकारवृत्त्यभिव्यक्तसाक्ष्यसंसर्गेण तयोस्तद्ग्राह्यत्वाभावात् । पीतिमसंसृष्टशङ्खगोचरैकवृत्त्यनभ्युपगमाच्च ‖ । न च नयनप्रदेशस्थस्य पित्तपीतिम्नो दोषाच्छङ्खे संसर्गाध्यासो नेष्यते किं तु नयनरश्मिभिः सह निर्गतस्य विषयव्यापिनस्तस्य तत्र संसर्गाध्या-

* रजतताम्रादिनानाधर्माध्यासे इदमर्थः इदं रजतं वा ताम्रं वेति संशयविशेष्यो भवतीत्यर्थः । † रजतबहुले ।

‡ इदमर्थावच्छिन्नचैतन्ये विद्यमाना रजतपरिणामिन्यविद्या दुष्टेन्द्रियसंपर्कादिरूपादध्यासनिमित्तकारणीभूतात् क्षोभं कार्याभिमुख्यं प्राप्नोति उत्तरक्षणे च रजतरूपेण परिणमते दुष्टेन्द्रियसंप्रयोगाद् वृत्तिरपि तथैव जायते तथा चाप्रतिबद्धाद्दुष्टेन्द्रियसंप्रयोगाद्भवन्तीदमर्थगोचरावृत्तिः स्वकालोत्पन्नरजतविशिष्टेदमर्थं विषयीकरोतीत्यर्थः । टी॰

§ दोषमात्रापेक्षित्वादिति भावः ।

‖ असंसर्गाग्रहसहितज्ञानद्वयमात्रेण तद्विषयकप्रवृत्त्यभ्युपगमस्यान्यत्रोपपादितत्वादिति भावः ।

सः कुसुम्भारुणितइव कौसुम्भइति संभवति तदाकारवृत्त्यभिव्यक्तसाक्षिसंसर्ग इति वाच्यम् । तथा सति सुवर्णलिप्तइव पित्तोपहतनयनेन वीक्ष्यमाणे शङ्खे तदितरेषां पीतिमधीप्रसङ्गात् । न च स पीतिमा समीपे गृहीत एव दूरे ग्रहीतुं शक्यः विहायसि उपर्युत्पतन्विहङ्गम इव इतरेषां च समीपेन ग्रहणमिति वाच्यम् । इतरेषामपि तच्चक्षुर्निकटन्यस्तचक्षुषां पीतिमसामीप्यसत्त्वेन तद्ग्रहणस्य दुर्वारत्वात् । एवमप्यतिधवलसिकतामयतलप्रवहदच्छनदीजले नैल्याध्यासे गगननैल्याध्यासे च रक्तवस्त्रेषु निशि चन्द्रिकायां नैल्याध्यासे चानुभूयमानारोपस्य वक्तुमशक्यत्वेन * तत्र नैल्यसंसृष्टाधिष्ठानगोचरचाक्षुषवृत्त्यनभ्युपगमे चक्षुरनुपयोगस्य दुष्परिहरत्वाच्च । अनास्वादिततिक्तरसस्य बालस्य मधुरे तिक्तताऽऽभासो जन्मान्तरानुभवसंस्कारहेतुक इति प्रतिपादयता पञ्चपादिकाग्रन्थेन स्वरूपतो ऽध्यस्यमानस्यैव तिक्तरसस्यैन्द्रियकत्वस्फुटीकरणाच्च । अन्यथा तत्र रसनव्यापारापेक्षानुपपत्तेः । तस्मादुदाहृतनैल्याध्यासस्थलेष्वधिष्ठानसंप्रयोगादेव तद्गोचरचाक्षुषवृत्तिसमकालोदयो ऽध्यासस्तस्या वृत्तेर्विषय इति तस्य चाक्षुषत्वमभ्युपगन्तव्यम् । रूपं विना केवलाधिष्ठानगोचरवृत्त्यभावे च विषयचैतन्याभिव्यक्त्यभावेन जलतदध्यस्तनैल्यादीनां तद्भास्यत्वायोगात् । तिक्तरसाध्यासस्थले त्वधिष्ठानाध्यासयोरेकेन्द्रियग्राह्यत्वाभावात् त्वगिन्द्रियजन्याधिष्ठानगोचरवृत्त्या तदवच्छिन्नचैतन्याभिव्यक्तौ पित्तोपहतरसनसंप्रयोगादेव तत्र तिक्तरसाध्यासस्तन्मात्रविषयरासनवृत्तिश्च समकालमुदेतीति तिक्तरसस्य रासनत्वमप्यभ्युपगन्तव्यम् । त्वगिन्द्रियजन्याधिष्ठानगोचरवृत्त्यभिव्यक्तचैतन्यभास्ये तिक्तरसे परंपरया ऽपि रसनोपयोगाभावेन तत्र कथमपि प्रकारान्तरेण रासनत्वानुभवसमर्थनासंभवात् । तथैव † रजतस्यापि चाक्षुषत्वोपपत्तेः पश्यामीत्यनुभवो न बाधनीयः । न चासंप्रयुक्तस्य रजतस्य चाक्षुषत्वे प्रत्यक्षमात्रे विषयेन्द्रियसंनिकर्षः कारणं द्रव्यप्रत्यक्षे तत्संयोगः कारणं रजतप्रत्यक्षे रजतसंयोगः कारणमिति गृहीताऽनेककार्यकारणनियमभङ्गः स्यादिति वाच्यम् । सन्निकर्षत्वस्य संयोगाद्यनुगतस्यैकस्याभावेनाद्यनियमासिद्धेः । द्वितीयनियमस्य नैयायिकरीत्या तमसीव संयोगायोग्ये क्व चि-

---

* तत्रारोप्यरूपस्य कुत्रापि धर्मिण्यसंसृष्टत्वादिति भावः ।

† चाक्षुषवृत्तिविषयत्वमादायैव चाक्षुषत्वानुभवसंभवे तदनुभवस्यारोपरूपत्वकल्पनमयुक्तमित्यर्थः । टी०

दद्रव्येऽपि द्रव्यत्वाध्याससंभवाद्व्यवहारदृष्ट्या यद्द्रव्यत्वाधिकरणं तद्विषयत्वेन प्रातिभासिकरजते द्रव्यत्वस्याधिष्ठानगतस्यैवेदंत्ववदध्यासात्प्रतीत्यभ्युपगमेन च द्वितीयनियमाविरोधात् । द्वितीयनियमरूपसामान्यकार्यकारणभावव्यतिरेकेण विशिष्यापि * कार्यकारणभावकल्पनाया गौरवपराहतत्वेन तृतीयनियमासिद्धेः । यत्सामान्ये यत्सामान्यं हेतुस्तद्विशेषे तद्विशेषो हेतुरिति न्यायस्यापि यत्र बीजाङ्कुरादौ सामान्यकार्यकारणभावाभ्युपगमे † बीजान्तराद‍ङ्कुरान्तरोत्पत्त्यादिप्रसङ्गः तद्विषयत्वेन ततोऽजागलस्तनायमानविशेषकार्यकारणभावासिद्धेः । न चात्रापि द्रव्यप्रत्यक्षे द्रव्यसंयोगः कारणमिति सामान्यनियममात्रोपगमे ‡ ऽन्यसंयोगादन्यद्रव्यप्रत्यक्षापत्तिरिति अतिप्रसङ्गोऽस्तीति वाच्यम् । § तद्द्रव्यसंयोगः कारणमिति नियमाभ्युपगमात् । अन्यथा || तृतीयनियमेऽप्यतिप्रसङ्गस्य दुर्वारत्वात् । तस्मान्नास्ति क्लृप्तनियमभङ्गः । किं चात्र क्लृप्तनियमभङ्गेऽपि न दोष इदं रजतं पश्यामीति नीलं जलं पश्यामीत्यादेरनन्यथासिद्धस्यानुभवस्य प्रथमगृहीतानामपि प्रत्यक्षमात्रे विषयसंनिकर्षः कारणमित्यादिनियमानां व्यावहारिकविषये संकोचकल्पनमन्तरेणोपपादनासंभवात् । न चैवं सति प्रमायां संनिकर्षः कारणं न भ्रमइत्यपि संकोचकल्पनासंभवादसंनिकृष्टस्यैव देशान्तरस्थस्यैवं रजतस्येहारोपापत्तिरित्यन्यथाख्यातिप्रसारिका ¶ । अभिव्यक्तचैतन्यावगुण्ठनशून्यस्य ** देशान्तरस्थरजतस्यापरोक्ष्यानुपपत्तेः । ख्यातिबाधानुपपत्त्यादिभिर्भ्रमविषयस्यानिर्वचनीयत्वसिद्धेश्च । न चाधिष्ठानसंप्रयोगमात्रात्प्रातिभासिकस्यैन्द्रियकत्वोपगमे शुक्तिरजताध्याससमये तत्रैव कालान्तरेऽध्यसनीयस्य रङ्गस्यापि चाक्षुषत्वं कुतो न स्यादिति वाच्यम् । रजताध्याससमये रङ्गरजतसाधारणचाकचक्यदर्शनाविशेषेऽपि यतो रागादिरूपपुरुषदोषाभावादितस्तत्र तदा न रङ्गाध्यासस्तत एव मया तद्विषयवृत्त्यनुदयस्याप्युपगमात् । तस्मादिदमंशसंभिन्नरजतगोचरा एकैव वृत्ति-

---

* तत्तद्व्यक्तित्वाघटितान्तरालिककार्यकारणभावस्येत्यर्थः ।

† भावमात्रेति द्रा॰ पुस्तके । ‡ नियमस्तत्रोपगमे इति पाठान्तरं क्लिष्टम् ।

§ तत्तद्द्रव्यप्रत्यक्षे तत्तद्द्रव्यसंयोगः कारणमिति ३ पु॰ पाठः ।

|| तद्व्यक्तित्वादिकमनन्तर्भाव्येत्यर्थः । ¶ वादः प्रसारित इति द्रा॰ पु॰ पाठः ।

** अर्थस्यापरोक्षत्वे इन्द्रियसंनिकृष्टत्वं न प्रयोजकं किं त्वभिव्यक्तचैतन्याभिन्नत्वमिति वक्ष्यते । तथा च भ्रमविषयस्य रजतादेर्देशान्तरस्थत्वे आपरोक्ष्यं न संभवतीति शुक्तितादात्म्यापन्नं रजतं सिध्यतीत्यर्थः । अवगुण्ठनं तादात्म्यम् । टी॰

रिन्द्रियजन्या न ततः प्रागिदमाकारा वृत्तिरिति नाचे *वेयमज्ञाननिवर्त्तकत्वसदसद्भावचिन्ता कार्य्येति ॥

अन्ये त्वधिष्ठानज्ञानमध्यासकारणमितीदमाकारां वृत्तिमुपेत्य तदभिव्यक्तेनैव साक्षिणा तदध्यस्तरजतस्यावभाससंभवात्तद्भासकसाक्ष्यभिव्यञ्जिकया तयैवेदंवृत्त्या † रजतविषयसंस्काराधानोपपत्तेश्च रजताकारा वृत्तिर्व्यर्थेति मन्यन्ते ॥

ज्ञानद्वयपक्षे इदमित्येका वृत्तिरध्यासकारणभूता इदं रजतमिति द्वितीया वृत्तिरध्यस्तरजतविषया न त्विदमंशं विना ऽध्यस्तमात्रगोचरा सा । इदं रजतं जानामीति तस्या इदमर्थतादात्म्यापन्नरजतविषयत्वानुभावादिति केचित् ॥

अन्ये तु यथेदमंशावच्छिन्नचैतन्यस्था ऽविद्या रजताकारेण विवर्त्तते एवमिदमंशविषयवृत्तिज्ञानावच्छिन्नचैतन्यस्था ऽविद्या रजतज्ञानाभासाकारेण विवर्त्तते न त्विदमंशवृत्तिवदनध्यस्तं ‡ रजतज्ञानमस्ति । तथा च रजतस्याधिष्ठानगतेदंत्वसंसर्गभानवत्तज्ज्ञानस्याप्यधिष्ठानगतेदंविषयत्वसंसर्गभानोपपत्तेर्न तस्यापीदंविषयत्वमभ्युपगन्तव्यम् । न च रजतत्ववदध्यस्तस्य रजतेदंत्वसंसर्गस्य रजतज्ञानगोचरत्वात्तत्प्रतियोगिन इदंत्वस्यापि तद्विषयत्वं वक्तव्यमिति वाच्यम् । स्वतादात्म्याश्रयस्येदंत्वविषयत्वादेव तस्य तत्संसर्गविषयत्वे ऽतिप्रसङ्गाभावात् । न चाधिष्ठानाध्यासयोरेकस्मिन् ज्ञाने प्रकाशनियमस्य संभावनाभाष्यविवरणे प्रतिपादनात् एकवृत्तिविषयत्वं वक्तव्यमिति वाच्यम् । वृत्तिभेदेपीदमाकारवृत्त्यभिव्यक्ते एकस्मिन्साक्षिणि तयोः प्रकाशोपगमादित्याहुः ॥

(१९) ननु सर्वपदार्थानां साक्षिप्रसादादेव प्रकाशोपपत्तेः किं वृत्त्या । घटादिविषयसंस्काराधानाद्युपपत्तये तदपेक्षणेपि § तन्निर्गमाभ्युपगमो व्यर्थः । परोक्षस्थल इवाऽनिर्गतवृत्त्यवच्छिन्नसाक्षिणैव घटादेरपि प्रकाशोपपत्तेः । न च तथा

* इदमाकारवृत्तावित्यर्थः । टी॰

† यद्वृत्त्यवच्छिन्नचैतन्ये यावन्तः पदार्था भासन्ते तयैव वृत्त्या तावत्सु पदार्थेषु संस्काराधानमिति प्रागुक्तत्वादिति भावः । टी॰

‡ ज्ञानाभासरूपं रजतज्ञानं रजतवत्प्रातिभासिकमेव न त्विदमाकारवृत्तिवद् व्यावहारिकं ज्ञानाभासस्यापि शुक्तिरजतवदेव शुक्त्यज्ञाननिवर्त्तकप्रत्यक्षबाध्यत्वादित्यर्थः । टी॰

§ ननु केवलसाक्षिण एव विषयानुभवरूपत्वे कालान्तरे विषयानुसंधानं न स्यादनुभवनाशलक्षणसंस्काराभावात्तथा ऽऽगन्तुकवृत्त्यनङ्गीकारे चक्षुराद्यनुविधानं न स्यान्नित्यसाक्षिणि चक्षुरादेरनुपयोगादतो वृत्तिरादर्त्तव्येत्याशङ्क्य तामङ्गीकरोति । टी॰

स्यात् परोक्षापरोक्षवैलक्षण्यानुपपत्तिः शाब्दानुमित्योरिव करणविशेषप्रयुक्तवृत्तिवैजात्यादेव तदुपपत्तेः । अत्र केचिदाहुः । प्रत्यक्षस्थले विषयाधिष्ठानतया तदवच्छिन्नमेव चैतन्यं विषयप्रकाशः साक्षात्तादात्म्यरूपसंबन्धसंभवे स्वरूपसंबन्धस्यान्यस्य वा कल्पनाऽयोगादिति तदभिव्यक्त्यर्थं युक्तो वृत्तिनिर्गमाभ्युपगमः । परोक्षस्थले व्यवहिते वह्न्यादौ वृत्तिसंसर्गायोगादिन्द्रियवदन्वयव्यतिरेकशालिनो वृत्तिनिर्गमद्वारस्यानुपलम्भाच्चानिर्गतवृत्त्यवच्छिन्नचैतन्यमेव स्वरूपसंबन्धेन विषयगोचरमगत्या ऽभ्युपगम्यत इति ॥

अन्ये त्वहंकारसुखदुःखादिष्वापरोक्ष्यं साक्षाच्चैतन्यसंसर्गेषु क्लृप्तमिति घटादावपि विषयसंसृष्टमेव चैतन्यमापरोक्ष्यहेतुरिति तदभिव्यक्तये * वृत्तिनिर्गमं समर्थयन्ते ॥

इतरे तु शब्दानुमानावगतेभ्यः प्रत्यक्षावगते स्पष्टता तावदनुभूयते न हि रसालपरिमलादिविशेषे शतवारमाप्तोपदिष्टे ऽपि प्रत्यक्षावगतइव स्पष्टतास्ति तदनन्तरमपि कथं तदिति जिज्ञासानुवृत्तेः । न च शब्दान्माधुर्यादिमात्रावगमेऽपि रसालमाधुर्यादिवृत्त्यवान्तरजातिविशेषवाचिशब्दाभावात्तत्सत्त्वेपि † श्रोतुस्तस्यागृहीतसङ्गतिकत्वाच्छब्दादसाधारणजातिविशेषावच्छिन्नमाधुर्यावगमो नास्तीति जिज्ञासानुवृत्तिर्युक्तेति शङ्क्यम् । रसाले सर्वातिशायी माधुर्यविशेषो ऽस्तीत्यस्माच्छब्दात्तद्गतावान्तरजातिविशेषस्याप्यवगमात् । न ह्ययं ‡ विशेषशब्दस्तद्गतं विशेषं विहायान्यगतं विशेषं तत्र बोधयति । अप्रामाण्यापत्तेः । न च तद्गतमेव विशेषं विशेषत्वेन सामान्येन रूपेण बोधयति न विशिष्येति जिज्ञासेति § वाच्यम् । प्रत्यक्षेणापि मधुररसविशेषणस्य जातिविशेषस्य स्वरूपत एव विषयीकरणेन जातिविशेषगतविशेषान्तराविषयीकरणाज्जिज्ञासानुवृत्तिप्रसङ्गात् । तस्मात्प्रत्यक्षग्राह्ये ऽभिव्यक्तापरोक्षैकरस || चैतन्यावगुण्ठनात्स्पष्टता जिज्ञासानिवर्तनक्षमा शब्दादिगम्ये तदभावादस्पष्टतेति व्यवस्थाभ्युपगन्तव्या । अत एव साक्षिवेद्यस्य सुखादेः स्पष्टता शाब्दवृत्तिवेद्य-

---

* विषयावच्छिन्नब्रह्मचैतन्याभिव्यक्तय इत्यर्थः । टी॰ † तदादिसर्वनामशब्दस्येति भावः ।

‡ न ह्ययं शब्दइति द्रा॰ १ पुस्तकयोः । § संभवतीति शेषः ।

|| अपरोक्षं स्वप्रकाशत्वमेकरसत्वमेकरूपत्वमभिव्यक्तस्य तस्य तादात्म्यात्प्रत्यक्षग्राह्ये स्पष्टता विषयताविशेषरूपेत्यर्थः ।

स्यापि ब्रह्मणो मननादेः प्रागज्ञानानिवृत्तावस्पष्टता तदनन्तरं तन्निवृत्तौ स्पष्टतेति वृत्तिनिर्गममुपपादयन्ति ॥

नन्वेतावतापि विषयावरकाज्ञाननिवृत्त्यर्थं वृत्तिनिर्गम इत्युक्तं तदयुक्तम् विषयावच्छिन्नचैतन्यगतस्य तदावरकाज्ञानस्यानिर्गतवृत्त्या निवृत्त्युपगमेऽप्यनतिप्रसङ्गात्। न च तथा सति देवदत्तीयघटज्ञानेन यज्ञदत्तीयघटाज्ञानस्यापि निवृत्तिप्रसङ्गः समानविषयत्वस्य सत्त्वात् अहमर्थविषयचैतन्यनिष्ठयोर्ज्ञानाज्ञानयोर्भिन्नाश्रयत्वेन तयोर्विरोधे समानाश्रयत्वस्या * तन्त्रत्वादिति वाच्यम् । समानाश्रयविषयत्वं ज्ञानाऽज्ञानयोर्विरोधप्रयोजकमङ्गीकृत्य वृत्तिनिर्गमाभ्युपगमे ऽपि देवदत्तीयघटवृत्तेर्यज्ञदत्तीयघटाज्ञानस्य च घटावच्छिन्नचैतन्यैकाश्रयत्वप्राप्त्या ऽतिप्रसङ्गतादवस्थ्येन यदज्ञानं यं पुरुषं प्रति यद्विषयावरकं तत्तदीयतद्विषयकज्ञाननिवर्त्यमिति पृथगेव विरोधप्रयोजकस्य वक्तव्यतया समानाश्रयत्वस्याऽनपेक्षणात् । अत्राहुः । वृत्तिनिर्गमानुपगमे ज्ञानाज्ञानयोर्विरोधप्रयोजकमेव दुर्निरूप्यम् । यदज्ञानं यं पुरुषं प्रतीत्याद्युक्तमिति चेन्न । परोक्षज्ञानेनापि विषयगताऽज्ञान † निवृत्तिप्रसङ्गात् । अपरोक्षत्वमपि निवर्तकज्ञानविशेषणमिति चेत् किं तदपरोक्षत्वं न तावज्जातिः दण्ड्ययमासीदिति संस्कारोपनीतदण्डविशिष्टपुरुषविषयस्य चाक्षुषज्ञानस्य दण्डांशेपि तत्सत्त्वे तत्रापि विषयगताज्ञाननिवृत्त्यापातात् दण्डं साक्षात्करोमीति तदंशेप्यापरोक्ष्यानुभवापत्तेश्च । अननुभवेपि संस्कारं संनिकर्षं परिकल्प्येन्द्रियसंनिकर्षजन्यतया तत्र काल्पनिकापरोक्ष्योपगमे ऽनुमित्यादावपि लिङ्गज्ञानादिकं संनिकर्षं परिकल्प्य तदङ्गीकारापत्तेः ‡ । दण्डांशे आपरोक्ष्यासत्त्वे तु तस्य जातित्वायोगाज्जातेर्व्याप्यवृत्तित्वनियमात् § । तदनियमे ऽप्यवच्छेदकोपाधिभेदानिरूपणेन || त-

* वृत्तिनिर्गमनाभावे सति ज्ञानमहमर्थनिष्ठमेव न विषयचैतन्यनिष्ठं विषयावरकाज्ञानं च विषयचैतन्यनिष्ठमेव न त्वहमर्थनिष्ठं तथा च समानाश्रयत्वं बाधितत्वान्न प्रयोजककोटिप्रविष्टमित्यर्थः । टी॰

† विशेषाकारेणापीति शेषः । न चेष्टापत्तिः जिज्ञासादर्शनात् ।

‡ अनुमितौ लिङ्गज्ञानं संनिकर्षः । उपमितौ सादृश्यज्ञानं शाब्दे पदार्थोपस्थितिः अर्थापत्तावनुपपद्यमानपदार्थज्ञानम् अभावे प्रतियोगिज्ञानम् इति कल्पनया प्रत्यक्षप्रमाणपरिशेषापत्तिरिति भावः । टी॰

§ अन्यथा एकस्यामेव प्रत्यभिज्ञायां तत्तांशे संस्कारजन्यतया स्मृतित्वापत्तौ जातिसंकरापत्तेरिति भावः । टी॰

|| स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वरूपाव्याप्यवृत्तित्वस्याऽवच्छेदकभेदं विना ऽनुपपत्तेरिति भावः ।

स्याऽव्याप्यवृत्तिजातित्वायोगाच्च । नाप्युपाधिस्तदनिर्वचनात् । इन्द्रियजन्यत्वमिति चेन्न साक्षिप्रत्यक्षाव्यापनात् । अनुमितिशाब्दज्ञानोपनीतगुरुत्वादिविशिष्टघटप्रत्यक्षे विशेषणांशातिव्यापनाच्च । कारणान्तराभावेन तदंशे परोक्षेऽप्युपनयसहकारिसामर्थ्यादिन्द्रियस्यैव जनकत्वादनुगतजन्यतावच्छेदकाग्रहेणानेकेष्विन्द्रियजन्यत्वस्य * दुर्ग्रहत्वाच्च । तद्ग्रहे † च तस्यैव प्रथमप्रतीतस्यांपरोक्ष्यरूपत्वोपपत्तौ प्रत्यक्षानुभवायोग्यस्येन्द्रियजन्यत्वस्य तद्योग्यापरोक्ष्यरूपत्वकल्पनायोगात् । एतेनेन्द्रियसंनिकर्षजन्यत्वमापरोक्ष्यमुपनयसहकृतेन्द्रियजन्यपरोक्षांशे च न संनिकर्षजन्यत्वमनुमितावप्युपनीतभानसत्त्वेन प्रमाणान्तरसाधारणस्योपनयस्यासंनिकर्षत्वादित्यपि शङ्का निरस्ता । संयोगादिसंनिकर्षाणामननुगमेनाननुगमाच्च । यत्त्वाभिमतमापरोक्ष्यं तदेव ममाप्यस्त्विति चेन्न । तस्य शाब्दापरोक्षनिरूपणप्रस्तावे ‡ प्रतिपादनीयस्य तथैव दर्शनीयया रीत्याऽज्ञाननिवृत्तिप्रयोज्यत्वेन तन्निवृत्तिप्रयोजकविशेषणाभावायोगात् । तस्मात्तरति शोकमात्मविदिति श्रुतस्य ब्रह्मज्ञानस्य मूलाज्ञानाश्रयभूतसर्वोपादानब्रह्मसंसर्गनियतस्य मूलाज्ञाननिवर्तकत्वादैन्द्रियकवृत्तयस्तत्तदिन्द्रियसंनिकर्षसामर्थ्यात्तत्तद्विषयावच्छिन्नचैतन्यसंसृष्टा एवोत्पद्यन्त इति नियममुपेत्याऽज्ञानाश्रयचैतन्यसंसर्गनियतत्वं निवर्तकज्ञानविशेषणं वाच्यम् । तथा च यदज्ञानं यं पुरुषं प्रति यद्विषयावरकं तत्तदीयतद्विषयतदज्ञानाश्रयचैतन्यसंसर्गनियतात्मलाभज्ञाननिवर्त्यमिति ज्ञानाऽज्ञानयोर्विरोधप्रयोजकं निरूपितं भवति । न चैवं सति नाडीहृदयस्वरूपगोचरशाब्दज्ञानस्याप्यज्ञाननिवर्तकत्वप्रसङ्गः । तस्य कदा चिदर्थसंपन्ननाडीहृदयान्यतरवस्तुसंसर्गसंभवेपि विषयसंसर्गं विनापि शाब्दज्ञानसंभवेन तत्संसर्गनियतात्मलाभत्वालाभात् § । तस्मादज्ञानज्ञानविरोधनिर्वाहाय वृत्तिनिर्गमो वक्तव्य इति ॥

अन्ये तु विषयगताज्ञानस्य लाघवात्समानाधिकरणज्ञाननिवर्तकत्वसिद्धौ वृत्तिनिर्गमः फलतीत्याहुः ॥

---

* रूपादिसाक्षात्कारेषु । टी॰

† अनुगतजन्यतावच्छेदकग्रहे इत्यर्थः ।

‡ तृतीयपरिच्छेदावसाने । टी॰

§ ऐन्द्रियकवृत्तीनां हि तत्तदिन्द्रियगोलकावच्छिन्नान्तःकरणप्रदेशेषूत्पत्तिः संभाव्यते इन्द्रियनिरपेक्षवृत्तीनां त्वन्तःकरणे जायमानानां प्रदेशनियमे कारणाभावात् । टी॰

अपरे तु बाह्यप्रकाशस्य बाह्यतमोनिवर्त्तकत्वं सामानाधिकरण्ये सत्येव दृष्टमिति दृष्टानुरोधाद्वृत्तिनिर्गमः सिध्यतीत्याहुः ॥

के चित्त्वावरणाभिभवार्थं वृत्तिनिर्गमानपेक्षायामपि चिदुपरागार्थं प्रमातृचैतन्यस्य विषयप्रकाशकब्रह्मचैतन्याभेदाभिव्यक्त्यर्थं वा तदपेक्षेत्याहुः ॥

अथ किंप्रमाणको ऽयं जीवब्रह्मणोरभेदः यो वृत्त्याभिव्यज्येत। वेदान्तप्रमाणक इति घण्टाघोषः। सर्वेऽपि वेदान्ता उपक्रमोसंहारैकरूप्यादितात्पर्यलिङ्गैर्विमृश्यमानाः प्रत्यगभिन्ने ब्रह्मण्यद्वितीये समन्वयन्ति। यथा चाऽयमर्थस्तथा शास्त्रएव समन्वयाध्याये प्रपञ्चितं विस्तरभयान्नेह प्रदर्श्यते ॥

## प्रथमः परिच्छेदः समाप्तः



# द्वितीयः परिच्छेदः



अथ कथमद्वितीये ब्रह्मणि वेदान्तानां समन्वयः प्रत्यक्षादिविरोधादिति चेन्न । आरम्भणा * धिकरणोदाहृतश्रुतियुक्तिभिः प्रत्यक्षाधिगम्यस्य प्रपञ्चस्य ब्रह्मविवर्त्तरूपतया मिथ्यात्वावगमात् । ननु न श्रुतियुक्तिभिः प्रपञ्चस्य मिथ्यात्वं प्रत्याययितुं शक्यते घटः सन्नित्यादिघटादिसत्त्वग्राहिप्रत्यक्षादिविरोधात् । अत्राहुस्तत्त्वशुद्धिकाराः † । न प्रत्यक्षं घटपटादि तत्सत्त्वं वा गृह्णाति किं त्वधिष्ठानत्वेन घटाद्यनुगतं सन्मात्रं ‡ तथा च प्रत्यक्षमपि सद्रूपब्रह्माद्वैतसिद्ध्यनुकूलमेव । तथा सति तत्सदित्येव प्रत्यक्षं स्यान्न तु घटः सन्नित्यादिप्रत्यक्षमिन्द्रियान्वयव्यतिरेकानुविधायीति चेन्न । यथा भ्रमेष्विदमंशस्याधिष्ठानस्य प्रत्यक्षेण ग्रहणम् इन्द्रियान्वयव्यतिरेकयोस्तत्रैवोपक्षयः रजतांशस्यारोपितस्य भ्रान्त्या प्रतिभासस्तथा सर्वत्र सन्मात्रस्य प्रत्यक्षेण ग्रहणम् तत्रैवेन्द्रियव्यापारः घटादिभेदविशिष्टवस्तुप्रतिभासो § भ्रान्त्येत्युपगमात् । ननु तर्ह्यदिह बाधादर्शनात्तथाभ्युपगम एव निर्मूल इति चेन्न । बाधादर्शनेपि देशकालव्यवहितवस्तुवद् घटादिभेदवस्तुनः प्रत्यक्षायोग्यत्वस्यैव तत्र मूलत्वात् । तथा हि । इन्द्रियव्यापारानन्तरं प्रतीयमानो घटादिः सर्वतो भिन्न एव प्रतीयते तदा तत्र घटादिभेदे संशयविपर्ययादर्शनात् । यद्यपि स्थाण्वादौ पुरुषत्वादिसंशयस्तत्रापि तद्व्यतिरिक्तेभ्यो भेदोऽसन्दिग्धाविपर्यस्तत्वात्प्रकाशत एव भेदस्य च प्रतियोगिसहोपलम्भ ‖ नियमवतो न प्रत्यक्षेण ग्रहणं संभवति देशकालव्यवधानेनासंनिकृष्टानामपि प्रतियोगिनां संभवात् । भेदज्ञानं प्रतियो-

---

* व्या॰ सू॰ अ॰ २ पा॰ १ सू॰ १४ ।

† कारादय इति द्रा॰ पाठः ।

‡ सद्रूपब्रह्मैव प्रत्यक्षप्रमेयमित्यर्थः ।

§ घटादेस्तद्भेदस्य च वस्तुनः प्रतिभासो भ्रान्त्या ऐन्द्रियकवृत्त्यभिव्यक्तसन्मात्ररूपसाक्षिचैतन्यलक्षणयेत्यभ्युपगमादित्यर्थः । एतेन सत्सदित्येव प्रत्यक्षं स्यादित्याक्षेप्ता भेदवाद्यपि निरस्तः । सिद्धान्तिना घटादौ सत्सत्त्वे च प्रत्यक्षस्य प्रामाण्यानङ्गीकारेपि घटादेः प्रत्यक्षज्ञाने साक्षिरूपे भानाङ्गीकारात् । टी॰

‖ ससंबन्धिकपदार्थप्रत्यक्षे यावत्संबन्धिविषयकत्वस्य यावत्संबन्धिप्रत्यक्षजन्यतायाश्च संयोगादिप्रत्यक्षे क्लृप्तत्वात्तथा च यावन्तः प्रतियोगिनस्तावतां प्रत्यक्षासंभवेन न भेदः प्रत्यक्षप्रमाप्रयोग्य इति तस्य भ्रान्तिमात्रसिद्धत्वं युक्तम् । टी॰

ष्यंशे संस्कारापेक्षणात् स्मृतिरूपमस्तु प्रत्यभिज्ञानमिव तत्तांशइति चेन्न। तथापि भेदगतप्रतियोगिवैशिष्ट्यांशे तदभावात्। न च कनकाचलो भेदप्रतियोगी वस्तुत्वादिति भेदप्रतियोगिवैशिष्ट्यगोचरानुमित्या तत्संस्कारसंभवः भेदज्ञानं विना ऽनुमित्यभावेनात्माश्रयापत्तेः। पक्षसाध्यहेतुपक्षताद्यभेदभ्रमे सति सिद्धसाधनादिना ऽनुमानाऽप्रवृत्त्या तदभेदज्ञानविघटनीयस्या * पेक्षितत्वात्। अस्तु तर्हि भेदांशइव प्रतियोगिवैशिष्ट्यांशेपि प्रत्यक्षत्वमिति चेन्न। प्रतियोगिनो ऽप्रत्यक्षत्वे तद्वैशिष्ट्यप्रत्यक्षायोगात्। संबन्धिद्वयप्रत्यक्षं विना संबन्धप्रत्यक्षासंभवात्। तस्मात्प्रत्यक्षायोग्यस्य प्रतियोगिनो भ्रान्तिरूप एव प्रतिभास इति तदेकवित्तिवेद्यत्वनियतस्य † भेदस्य भेदैकवित्तिवेद्यत्वनियतघटादेश्च भ्रमैकविषयत्वात्प्रत्यक्षं निर्विशेषसन्मात्रग्राह्यद्वैतसिद्ध्यनुकूलमिति ॥

न्यायसुधाकृतस्त्वाहुः। घटादेरैन्द्रियकत्वेपि सन् घट इत्यादिरधिष्ठानसत्तानुवेध ‡ इति न विरोधः। एवं नीलो घट इत्यादिरधिष्ठाननैल्याद्यनुवेधः किं न स्या § दिति चेन्न। श्रुत्या सद्रूपस्य वस्तुनो जगदुपादानत्वमुक्तमविरोधात्सर्वसंमतमिति तदनुवेधेनैव सन् घट इत्यादिप्रतिभासोपपत्तौ घटादावपि सत्ताकल्पने गौरवम्। तस्य रूपादिहीनत्वान्नैल्यादिकं घटादावेव कल्पनीयमिति वैषम्या || दिति ॥

सङ्क्षेपशारीरकाचार्यास्त्वाहुः। प्रत्यक्षस्य घटादिसत्त्वग्राहित्वेपि परा¶ ग्विषयस्य प्रत्यक्षादेः तत्त्वावेदकत्वलक्षणप्रामाण्याभावान्न तद्विरोधेनाद्वैतश्रुत्यादिबाधशङ्का। अज्ञातबोधकं हि प्रमाणं न च प्रत्यक्षादिविषयस्य घटादेरज्ञातत्वमस्ति जडआवरणकृत्याभावेना ** ज्ञानविषयत्वानुपगमात्। स्वप्रकाशतया प्रसक्तप्रकाशं ब्रह्मैवाज्ञानविषय इति तद्बोधकमेव तत्त्वावेदकं प्रमाणं तदेव प्रमितिविषयः। अत एव श्रुतिरप्यात्मा वाअरे द्रष्टव्य इत्यात्मन एव प्रमेयत्वमिति नियच्छति। न हि द्रष्टव्य इत्यनेन दर्शनं विधीयते प्रमाणपर-

---

* तद्भेदज्ञानस्येत्यधिकं ४ पु॰ पाठः।

† तत्पदं प्रतियोगिपरं नियमेन प्रतियोगिज्ञानविषयस्येत्यर्थः वित्तिपदं प्रत्यक्षपरं भेदपदजन्यज्ञानस्य प्रतियोगिविषयकत्वादर्शनादिति बोध्यम्। टी॰

‡ अनुवेध आरोपः। § तथा च ब्रह्मणो नीरूपत्वाभ्युपगमविरोध इति भावः।

|| वैषम्यमितीति द्वा॰ पाठः। ¶ जडमात्रविषयकस्येत्यर्थः। टी॰

** कृत्यं कार्यं फलमिति यावत्। टी॰ तस्य स्वभावतः प्रकाशविरोधित्वेनावरणाभ्युपगमवैयर्थ्यादिति भावः।

न्तरस्य * विध्यगोचरत्वात् किं त्वात्मा दर्शनार्ह इति अज्ञातत्वादात्मन एव प्रमेयत्वमुचितं नान्यस्येति नियम्यतइति ॥

केचित्तु घटादिसत्त्वग्राहिणः प्रत्यक्षस्य प्रामाण्ये ब्रह्मप्रमाणाऽन्यूनतावगमेपि तद्ग्राह्यं सत्त्वमनुगतप्रत्ययात्सत्ताजातिरूपं वा इहेदानीं घटोस्तीति देशकालसंबन्धप्रतीतेस्तत्तद्देशकालसंबन्धरूपं वा नास्ति घट इति स्वरूपनिषेधप्रतीते † घटादिस्वरूपं वा पर्यवस्यति । तच्च ‡ मिथ्यात्वेन न विरुध्यते न हि मिथ्यात्ववादिनापि घटादेः स्वरूपं वा तस्य देशकालसंबन्धो वा तत्र जात्यादिकं वा नाभ्युपगम्यते किं तु तेषामबाध्यत्वम् । न चाऽबाध्यत्वमेव सत्यत्वं प्रत्यक्षग्राह्यमस्त्विति वाच्यम् । कालत्रयेपि नास्य बाध इति वर्तमानमात्रग्राहिणा प्रत्यक्षेण ग्रहीतुमशक्यत्वादित्याहुः ॥

अन्ये तु अबाध्यत्वरूपसत्यत्वस्य प्रत्यक्षग्राह्यत्वेपि प्राणा वै सत्यं तेषाम् एष सत्यमिति श्रुत्या प्रधानभूतप्राणग्रहणोपलक्षितस्य कृत्स्नप्रपञ्चस्य ब्रह्मणश्च सत्यत्वोत्कर्षापकर्षप्रतीतेः सत्यत्वे चाबाध्यत्वरूपे सर्वदैवाबाध्यत्वं किञ्चित्कालमबाध्यत्वमित्येवंविधोत्कर्षापकर्षं विना राजराजो मन्मथमन्मथ इत्यादिशब्दतात्पर्यगोचरनियन्तृत्वसौन्दर्यादीनामिव भूयो विषयत्वाल्पविषयत्वादिरूपोत्कर्षापकर्षाऽसंभवाद्विधान्तरेण § तत्संभवेपि प्रपञ्चस्य ब्रह्मज्ञानबाध्यत्वश्रुत्यन्तरैकार्थ्यादुक्तोत्कर्षापकर्षएव पर्यवसानाच्च प्रत्यक्षग्राह्यं घटादिसत्यत्वं ‖ यावद्ब्रह्मज्ञानमबाध्यत्वरूपमिति न मिथ्यात्वश्रुतिविरोध इत्याहुः ॥

अपरे तु प्रपञ्चस्य सत्यत्वमिथ्यात्वग्राहिणोः श्रुतिप्रत्यक्षयोर्विरोधेपि दोषशङ्काकलङ्कितात्प्रथमप्रवृत्तात्प्रत्यक्षान्निर्दोषत्वादपच्छेदन्यायेन परत्वाच्च श्रुतिरेव बलीयसी । प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतमिति ¶ स्मरणाच्च । न च वेदैकगम्यार्थविषयकमिदं स्मरणम् । तत्र प्रत्यक्षविरोधशङ्काभावेन शङ्कितप्रत्यक्षविरोधएव वेदार्थे वेदस्य प्राबल्योक्त्यौचित्यात् । तलवद्दृश्यते व्योम

* तस्येत्यधिकं ४ पु॰ पाठः ।

† घटो नास्तीति घटास्तितानिषेधत्वेन रूपेण घटस्वरूपनिषेधस्यैवानुभवाद्घटास्तित्वं घटस्वरूपमेव पर्यवस्यतीत्यर्थः । टी॰ ‡ स्वमिथ्यात्वेनेति द्रा॰ पाठः ।

§ विधान्तरेण प्रकारान्तरेण । ‖ घटादिसत्त्वमिति द्रा॰ पाठः ।

¶ प्रत्यक्षानुमानागमेषु मध्ये जात्या वेदत्वेनैवागमस्य प्राबल्यं स्मृतमित्यर्थः ।

खद्योतो हव्यवाडिव। न तलं विद्यते व्योम्नि न खद्योतो हुताशनः । तस्मात्प्रत्यक्षदृष्टेऽपि युक्तमर्थं परीक्षितुम् । परीक्ष्य ज्ञापयन्नर्थान्न धर्मात्परिहीयते इति नारदस्मृतौ साक्षिप्रकरणे प्रत्यक्षदृष्टस्यापि प्रत्यक्षमविश्वस्य प्रमाणोपदेशादिभिः परीक्षणीयत्वप्रतिपादनाच्च । न हि नभोनैल्यप्रत्यक्षं नभसः शब्दादिषु पञ्चसु शब्दैकगुणत्वप्रतिपादकागमोपदेशमन्तरेण प्रत्यक्षादिना शक्यमपवदितुम् । न च नभसि समीपे नैल्यानुपलम्भाद् दूरे तद्धीर्दूरत्वदोषजन्येति निश्चयेन तद्बाधः । दूरे नैल्यदर्शनात्समीपे तदनुपलम्भः तुहिनाव*-कुण्ठनानुपलम्भव† त्समीपदोषजन्य इत्यपि संभवात् । अनुभवबलान्नभोनैल्यमव्याप्यवृत्तीत्युपपत्तेश्च । नापि दूरस्थस्य पुंसो यत्र भूसन्निहिते नभःप्रदेशे नैल्यधीस्तत्रैव समीपगतस्य नैल्यबुद्धेरभावप्रत्यक्षेण बाधः‡ उपरि स्थितस्यैव नैल्यस्याऽभ्रनक्षत्रादेरिव दूरत्वदोषाद्भूसंनिधानावभास§ इत्युपपत्तेः । पृथिव्यादिषु संकीर्णतया प्रतीयमानानां गन्धादीनामुपलभ्याप्सु चेद्गन्धं केचिद् ब्रूयुरनैपुणाः पृथिव्यामेव तं विद्यादपो वायुं च संश्रितमित्यादिभिरागमैरेव व्यवस्थाया वक्तव्यत्वेन प्रत्यक्षादागमप्राबल्यस्य निर्विशङ्कत्वाच्च । न ह्याजानसिद्धं‖ जलोपष्टम्भादिगतं गन्धादि पृथिवीगुण एव गन्धो न जलादिगुण इत्यादिरूपेणास्मदादिभिः प्रत्यक्षेण शक्यं विवेचयितुम् । पृथिव्यादीनां प्रायः परस्परसंसृष्टतयाऽन्यगुणस्यान्यत्राप्यवभासः संभवतीति शङ्कितदोषं प्रत्यक्षं तत्रागमेन शिक्ष्यतइति चेत्तर्हीहापि ब्रह्मप्रपञ्चयोरुपादानोपादेयभावेन परस्परसंसृष्टतयाऽन्यधर्मस्यान्यत्रावभासः संभाव्यतइति शङ्कितदोषं प्रत्यक्षम् अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयमितिवृद्धोक्तप्रकारेणागमेन व्यवस्थाप्यतामिति तुल्यम् । न चैवमुपजीव्यविरोधः आगमप्रमाणेन वर्णपदवाक्यादिस्वरूपांशप्रत्यक्षमुपजीव्यानुपजीव्यविरोधः आगमप्रमाणेन वर्णपदवाक्यादिस्वरूपांशप्रत्यक्षमुपजीव्य तत्सत्यत्वांशोपमर्दनादि¶ त्याहुः ॥

---

* तुहिनावकुण्ठनं तुहिनरूपमावरणं तद्धि समीपे सदपि न दृश्यते दूरे घनावावरणरूपत्वेन दृश्यते तद्वत् । टी॰ † सामीप्यदोषेति द्रा॰ पु॰ पाठः ।

‡ तथा च तस्य तात्त्विकत्वाभ्युपगमो नोचित इति भावः ।

§ भ्रमः । ‖ स्वाभाविकम् ।

¶ आगमजन्यबोधे वर्णादिप्रत्यक्षत्वेन प्रयोजकत्वेऽपि तत्सत्यत्वांशस्याप्रयोजकत्वेनानुपजीव्यो यः सत्यत्वांशस्तस्य बाधा इत्यर्थः ।

नन्वागमस्य प्रत्यक्षाद् बलीयस्त्वे यजमानः प्रस्तर इत्यत्र प्रत्यक्षाविरोधाय यजमानशब्दस्य प्रस्तरे गौणी वृत्तिर्न कल्पनीया। तथा सोमेन यजेतेत्यत्र वैयधिकरण्येनान्वये यागे इष्टसाधनत्वं सोमलतायां यागसाधनत्वं च बोधनीयमिति व्यापारभेदेन वाक्यभेदापत्तेः सामानाधिकरण्येनान्वये वक्तव्ये प्रत्यक्षाविरोधाय सोमवता यागेनेति मत्वर्थलक्षणा न कल्पनीया। उभयत्रापि सत्यपि प्रत्यक्षविरोधे तदनादृत्यागमेन बलीयसा प्रस्तरे यजमानाऽभेदस्य यागे सोमाभेदस्य च सिद्धिसंभवादिति चेद् अत्रोक्तं भामतीनिबन्धे। तात्पर्यवती श्रुतिः प्रत्यक्षाद्बलवती न श्रुतिमात्रम् मन्त्रार्थवादानां स्तुतिद्वारभूतेऽर्थे वाक्यार्थद्वारभूते पदार्थे इव न तात्पर्यम्। तात्पर्याभावे मानान्तराविरुद्धं देवताविग्रहादि कथं तेभ्यः सिद्ध्येत् तात्पर्यवत्येव * शब्दस्य प्रामाण्यनियमादिति चेन्न। एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेतेति विशिष्टविधेस्तात्पर्यगोचरे † विशेषणस्वरूपे प्रामाण्यदर्शनेनोक्तनियमासिद्धेः। अत्र हि रेवतीऋगाधारं ‡ वारवन्तीयं सामविशेषणम्। न चैतत्सोमादिविशेषणवत् लोकसिद्धं येन तद्विशिष्टयागविधिमात्रे प्रामाण्यं वाक्यस्य स्यात्। नापि विशिष्टविधिना विशेषणाक्षेपः आक्षेपाद्विशेषणप्रतिपत्तौ विशिष्टगोचरो विधिस्तस्मिँश्च सति तेन विशेषणाक्षेप इति परस्पराश्रयापत्तेः। अतो विशिष्टविधिपरस्यैव वाक्यस्य विशेषणस्वरूपेऽपि प्रामाण्यं वक्तव्यम्। अथ च तत्र न तात्पर्यमुभयत्र तात्पर्ये वाक्यभेदापत्तेः। एवमर्थवादानामपि विधेयस्तुतिपराणां स्तुतिद्वारभूतेऽर्थे § न तात्पर्यमिति तेभ्यः प्रत्यक्षस्यैव बलवत्त्वात्तदविरोधाय तेषु वृत्त्यन्तरकल्पनम्। सोमेन यजेतेत्यत्र विशिष्टविधिपरे वाक्ये सोमद्रव्याभिन्नयागरूपं विशिष्टं विधेयमित्युपगमे तस्य विधेयस्य दध्ना जुहोतीत्यादौ विधेयस्य दध्यादेरिव लोकसिद्धत्वाभावेन विशिष्टविधिपराद्वाक्यादेव रेवत्याधारवारवन्तीयादिविशेषणस्येव विना तात्पर्यं सिद्धिरेष्टव्या न च तात्पर्यरहितादागमाद्यागसोमलताभेदयोर्हिप्रत्यक्षविरुद्धार्थः सिद्ध्यतीति तथापि तदविरोधाय मत्वर्थलक्षणाश्रयणम्। अद्वैतश्रुतिस्तूपक्रमोपसंहारैकरूप्यादिषड्विधलिङ्गावगमिताद्वैततात्पर्या प्रत्यक्षाद्बलवतीति ततः प्रत्यक्षस्यैव बाधः न तदविरोधाय श्रुतेरन्यथा नयनमिति॥

---

* तात्पर्यविषयेइत्यर्थः। † गोचरे ऽपीति द्वा॰ पाठः।

‡ ऋग् आधारो यस्येति बहुव्रीहिः। § वाक्यादापाततः प्रतीयमाने।

विवरणवार्त्तिके तु प्रतिपादितं न तात्पर्यवत्त्वेन श्रुतेः 'प्रत्यक्षात्प्राबल्यं कृष्णलं श्रपयेदिति विधेः श्रपणस्य कृष्णलार्थत्वप्रतिपादने तात्पर्येऽपि कृष्णले रूपरसपरावृत्तिप्रादुर्भावपर्यन्तमुख्यश्रपणसंबन्धः प्रत्यक्षविरुद्ध इति तदविरोधाय श्रपणशब्दस्योष्णीकरणमात्रे लक्षणाभ्युपगमात् । तत्त्वमसीति वाक्यस्य जीवब्रह्माभेदप्रतिपादने तात्पर्येऽपि त्वंपदवाच्यस्य तत्पदवाच्याऽभेदः प्रत्यक्षविरुद्ध इति तदविरोधाय निष्कृष्टचैतन्यलक्षणाभ्युपगमाच्च । अर्थवादानामपि प्रयाजाद्यङ्गविधिवाक्यानामिव स्वार्थप्रमितावनन्यार्थतया * प्रमितानामेवार्थानां प्रयोजन † वशादन्यार्थतेति प्रयाजादिवाक्यवत्तेषामप्यवान्तरसंसर्गे तात्पर्यमस्त्येव वाक्यैकवाक्यत्वात् । पदैकवाक्यतायामेव परमवान्तरतात्पर्यानभ्युपगमादिति विवरणाचार्यैर्न्यायनिर्णये व्यवस्थापनेन यजमानः प्रस्तर इत्यादीनामपि मुख्यार्थतात्पर्यप्रसक्तौ प्रत्यक्षाविरोधायैव लक्षणाभ्युपगमाच्च । कथं तर्हि श्रुतेः प्राबल्यमुच्यते निर्दोषत्वात्परत्वाच्च ‡ श्रुतिमात्रं § प्रत्यक्षात्प्रबलमित्युत्सर्गः । किं तु श्रुतिबाधितमपि प्रत्यक्षं कथं चित्स्वोचितविषयोपहारेण संभावनीयं निर्विषयज्ञानायोगात् । अत एवाद्वैतश्रुतिविरोधेन तत्त्वावेदनात्प्रच्यावितं प्रत्यक्षमर्थक्रियासमर्थव्यावहारिकविषयसमर्पणेनोपपाद्यते । किं बहुना नेदं रजतमिति सर्वसिद्धप्रत्यक्षबाधितमपि शुक्तिरजतप्रत्यक्षमनुभवाविरोधात्पुरोदेशे शुक्तिसंभिन्न ‖ रजतोपगमेन समर्थ्यते न तु तद्विरोधेन व्यवहितमान्तरमसदेव वा रजतं विषय इति कल्प्यते । एवं च प्रस्तरे यजमानभेदग्राहिणो यावद्ब्रह्मज्ञानमर्थक्रियासंवादेनानुवर्त्तमानस्य प्रत्यक्षस्य प्रातिभासिकविषयत्वाभ्युपगमेनोपपादनायोगाद्यजमानः प्रस्तर इति श्रुतिबाध्यत्वे सर्वथा निर्विषयत्वं स्यादिति तत्परिहारायोत्सर्गमपोद्य श्रुतिरेव तत्सिद्ध्य ¶ धिकरणादिप्रतिपादितप्रकारेणान्यथा नीयते । न चाद्वैतश्रुति-

* स्वार्थपरतयेत्यर्थः । टी॰

† तेषां स्वार्थप्रमितिमात्रेण फलाभावाद्विधेयस्तावकत्वेन विध्येकवाक्यत्वं कल्प्यतइति भावः । टी॰

‡ पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सेत्स्यतीति न्यायादुत्तरोत्पत्तिकबोधजनकत्वादिति भावः ।

§ श्रुतिमात्रस्य प्रत्यक्षात् प्राबल्यमिति द्वा॰ पु॰ पाठः ।

‖ शुक्तितादात्म्यापन्नेत्यर्थः । टी॰

¶ तस्य क्रतोः सिद्धिरुपकारो यजमानप्रस्तरसाध्यो गुणः तयोः क्रतुनिर्वर्तकत्वरूपं सादृश्यं गुण इति यावत् । टी॰

प्रत्यक्षयोरिवेह श्रुतिप्रत्यक्षयोस्तात्त्विकव्यावहारिकत्वविषयोपगमेन * प्रत्यक्षो-पपादनं कर्तुं शक्यम् । ब्रह्मातिरिक्तसकलमिथ्यात्वप्रतिपादकषड्विधतात्पर्यलि-ङ्गोपपन्नाऽनेकश्रुतिविरुद्धेनैकेनार्थवादेन प्रस्तरे यजमानतादात्म्यस्य तात्त्वि-कस्य प्रतिपादनाऽसंभवात् । एवं तत्त्वमसिवाक्येन त्वंपदवाच्यस्य सर्वज्ञत्वा-ऽभोक्तृत्वादिविशिष्टब्रह्मरूपत्वबोधने तथासर्वज्ञत्वभोक्तृत्वादिप्रत्यक्षमत्यन्त-निरालम्बनं स्यादिति तत्परिहारायाहंकारशबलितस्य भोक्तृत्वादि ततो निष्कृष्टस्य शुद्धस्योदासीनब्रह्मरूपत्वमितिव्यवस्थामाश्रित्य भागत्यागलक्षणा ऽऽश्रीयते । एवं कृष्णलं श्रपयेदित्यादावपि प्रत्यक्षस्या † त्यन्तनिर्विषयत्वप्र-सक्तौ तत्परिहाराय श्रुतौ लक्षणा । नेह नानास्ति किं चनेत्यत्र कथं ‡ चि-द्विषयोपपादनसंभवे तु न प्रबलायाः श्रुतेरन्यथा नयनमिति न कश्चिदप्यव्यव-स्थाप्रसङ्गः । अथ वा कृष्णलं श्रपयेत्सोमेन यजेतेत्यादौ न प्रत्यक्षानुरोधेन लक्षणाश्रयणं किं त्वनुष्ठानाशक्त्या । न हि कृष्णले उष्णीकरणमात्रमिव मुख्यः पाको ऽनुष्ठातुं शक्यते न वा सोमद्रव्यकरणको याग इव तदभिन्नो यागः केन चिदनुष्ठातुं शक्यते । न चानुष्ठेयत्वाभिमतस्य प्रत्यक्षविरोध एवानुष्ठानाऽश-क्तिरिति शब्दान्तरेण व्यवह्रियतइति वाच्यम् । शशिमण्डलं कान्तिमत्कु-र्यादिति विधावनुष्ठेयत्वाभिमतस्य शशिमण्डले कान्तिमत्त्वस्य प्रत्यक्षाविरोधे ऽप्यनुष्ठानाऽशक्तिदर्शनेन तस्यास्ततो भिन्नत्वात् । तथा च तत एव तत्र लक्षणाश्रयणम् । तस्मादपच्छेदन्यायादिसिद्धस्य श्रुतिबलीयस्त्वस्य न कश्चि-द्बाध इति । अथ कथमत्रापच्छेदन्यायप्रवृत्तिः । उच्यते । यथा ज्योतिष्टोमे बहिष्पवमानं सर्पता § मुद्गातुरपच्छेदे सति यद्युद्गाताऽपच्छेद्येत ‖ ऽदक्षिणं यज्ञमिष्ट्वा तेन पुनर्यजेतेति ¶ निरीक्षणेन जातोद्गात्रपच्छेदनिमित्त ** कर्तव्य-ताबुद्धिः पश्चात्प्रतिहर्त्रऽपच्छेदे सति यदि प्रतिहर्तापच्छेद्येत सर्ववेदसं †† दद्यादिति श्रुतिनिरीक्षणेन जातया तद्विरुद्धप्रतिहर्त्रऽपच्छेदनिमित्तकर्तव्यता-बुद्ध्या बाध्यते एवं पूर्वघटादिसत्यत्वप्रत्यक्षं परया तन्मिथ्यात्वश्रुतिजन्य-

* विषयत्वोपेति द्रा॰ पु॰ पाठः ।

† अपणस्य । कृष्णले रूपपरावृत्त्यसंभवादुष्णीकरणमात्रे लक्षणेत्युक्तम् ।

‡ कल्पितपारमार्थिकद्वैताद्वैतरूपविषयभेदाङ्गीकारेणेत्यर्थः ।

§ बहिष्पवमानं स्तोत्रमुद्दिश्यान्वारब्धतया निर्गच्छतामृत्विजां मध्ये । टी॰

‖ अपच्छिद्येतेति ४ पु॰ पाठः एवमग्रेपि ।   ¶ इति श्रुतिनिरीति द्रा॰ पु॰ पाठः ।

** प्रायश्चित्तेति ४ पु॰ अधिकम् । एवमग्रेपि ।   †† सर्वस्वं दक्षिणात्वेन ।

बुद्धा बाध्यते । न चोदाहृतस्थले पूर्वनैमित्तिककर्त्तव्यताबुद्धेः परनैमित्तिककर्त्तव्यताबुद्धा बाधेपि पूर्वनैमित्तिककर्त्तव्यताबुद्धिजनकं शास्त्रं यथोद्गातृमात्रापच्छेद उभयोरपि युगपदपच्छेदो * वा उद्गात्रऽपच्छेदस्य परत्वं वा तत्र सावकाशं प्रत्यक्षं त्वद्वैतश्रुत्या बाधे विषयान्तराभावान्निरालम्बनं स्यादिति वैषम्यं शङ्कनीयम् । यत्र घटादौ श्रुतिबाध्यं प्रत्यक्षं प्रवर्त्तते तत्रैव व्यावहारिकं विषयं लब्ध्वा कृतार्थस्य तस्य परापच्छेदस्थले सर्वथा बाधितस्य पूर्वापच्छेदशास्त्रस्येव विषयान्तरान्वेषणाभावादिहापि सर्वप्रत्ययवेद्यब्रह्मसत्तायां सावकाशं प्रत्यक्षमिति वक्तुं शक्यत्वाच्च । यत्त्वेकस्मिन्नपि प्रयोगे क्रमिकाभ्यां निमित्ताभ्यां क्रतौ तत्तद्नैमित्तिककर्त्तव्यतयोः बदरफले श्यामरक्तरूपयोरिव क्रमेणोत्पादा † द्रूपद्वयज्ञानवत्कर्त्तव्यताज्ञानद्वयमपि प्रमाणमेवेति न परेण पूर्वज्ञानबाधे ऽपच्छेदन्याय उदाहरणम् । अत एवापच्छेदाधिकरणे नैमित्तिकशास्त्रस्य ह्ययमर्थः निमित्तोपजननात्प्रागन्यथाकर्त्तव्योपि क्रतुर्निमित्ते सत्यन्यथा कर्त्तव्य इतिशास्त्रदीपिकावचनमिति । तन्न । अङ्गस्य सतः कर्त्तव्यत्वं ‡ न च पश्चाद्भाविप्रतिहर्त्रपच्छेदवति क्रतौ पूर्ववृत्तोद्गात्रपच्छेदनिमित्तकस्य प्रायश्चित्तस्याङ्गत्वमस्ति आहवनीयशास्त्रस्य पदहोमातिरिक्तहोमविषयत्ववद्यद्युद्गातेति शास्त्रस्य पश्चाद्भाविप्रतिहर्त्रपच्छेदरहितक्रतुविषयत्वात् । उक्तं हि न्यायरत्नमालायाम् । साधारणस्य शास्त्रस्य विशेषविषयादिना संकोचः क्लृप्तरूपस्य प्राप्तबाधो ऽभिधीयतइत्युक्तं लक्षणप्राप्तबाधविवेचने । तथैवं सति शास्त्रार्थो भवति पश्चाद्भाव्युद्गात्रऽपच्छेदविधुरप्रतिहर्त्रऽपच्छेदवतः क्रतोः सर्ववेदसदानमङ्गमेवमुद्गात्रऽपच्छेदेपि द्रष्टव्यमिति । यत्तु शास्त्रदीपिकावचनमुदाहृतं तदपि तेनोत्पन्नमपि पूर्वप्रायश्चित्तज्ञानं मिथ्या भवति बाधितत्वाद् उत्तरस्य तु न किं चिद्बाधकमस्तीति पूर्वकर्त्तव्यताबाध्यत्वप्र-

---

* उद्गातृप्रतिहर्त्रपच्छेदयोर्योगपद्यस्थले उद्गात्रपच्छेदनिमित्तकमेव प्रायश्चित्तमनुष्ठेयमित्यापस्तम्बाचार्येरुक्तत्वादिति भावः । टी॰

† पूर्वनिमित्तेन जातमात्रेण पूर्वनैमित्तिककर्तव्यता जायते पाश्चात्त्येन च निमित्तेन पूर्वकर्तव्यतानाशपूर्वकमुत्तरनैमित्तिककर्तव्यतोत्पाद्यतइत्यर्थः । टी॰ अनुष्ठानयोरेव बाध्यबाधकभावो न ज्ञानयोरिति भावः ।

‡ क्रमेण विरुद्धापच्छेदद्वयवति क्रतौ पूर्वनैमित्तिकस्य कर्त्तव्यतानिष्पत्तौ मानं नास्तीति तत्र पूर्वप्रायश्चित्तस्यानङ्गत्वात्तदनङ्गत्वं च तद्बोधकमानाभावाच्च पूर्वनैमित्तिकशास्त्रं तत्र मानं तस्य प्रयोगान्तरेषु सावकाशत्वेन तत्राप्यङ्गत्वबोधकाभावात् । टी॰

त्तिपादकग्रन्थोपसंहारपठितत्वान्निमित्तोपजननात्प्राङ्निमित्तोपजननं विना निमित्तोपजननाभावे सत्यन्यथा कर्तव्यो ऽपीति कृत्वाचिन्तामात्रपरम् । न तूत्तरनिमित्तोपजननात्प्राक् पूर्वनैमित्तिककर्तव्यता वस्तुत आसीदित्येवंपरम् पूर्वग्रन्थसन्दर्भविरोधापत्तेः । आस्तां मीमांसकमर्य्यादा श्यामरक्तरूपन्यायेन क्रमिककर्तव्यताद्वयोत्पत्त्युपगमे को विरोधः । उच्यते * । किं तत्कर्तव्यत्वं यत्परनैमित्तिककर्तव्यतोत्पत्त्या निवर्तते । न तावत्पूर्वनैमित्तिकस्य कृतिसाध्यत्वयोग्यत्वं तस्य पश्चादप्यनपायात् । नापि फलमुखं कृतिसाध्यत्वं तस्य पूर्वमप्यजननात् । नापि यदननुष्ठाने क्रतोर्वैकल्यं तत्त्वमङ्गत्वं वा अननुष्ठाने क्रतुवैकल्यप्रयोजकत्वस्य नियमविशेषरूपत्वेन कर्माङ्गत्वस्य फलोपकारितया संनिपातितया वा कारणत्वविशेषरूपत्वेन च तयोः कादाचित्कत्वायोगेन स्वाभाविकत्वनिर्वाहाय पश्चा † द्भाविविरुद्धापच्छेदाभाववतः क्रतोः पूर्वापच्छेदनैमित्तिकमङ्गं तथैव तदननुष्ठानं क्रतुवैकल्यप्रयोजकम् इति विशेषणीयतया पाश्चात्यापच्छेदवति क्रतौ पूर्वापच्छेदनैमित्तिके क्रत्वङ्गत्वस्य तदननुष्ठाने क्रतुवैकल्यप्रयोजकत्वस्य वा पाश्चात्यापच्छेदोत्पत्तेः पूर्वमसंभवात् । न हि वस्तु किं चिद्वस्त्वन्तरं प्रति कं चित्कालं व्याप्यं पश्चान्नेति वा कं चित्कालं कारणं पश्चान्नेति वा क्व चिद् दृष्टं युक्तं वा । नापि कर्तव्यत्वं नाम धर्मान्तरमेवागमापाययोग्यं कल्पनीयं मानाभावात् । विरुद्धापच्छेदशास्त्रयोः पदाहवनीयशास्त्रवद्व्यवस्थोपपत्तेः । तस्मान्निरालम्बनं क्रमिककर्तव्यताद्वयोत्पत्तिवचः ॥

ननु चोपक्रमाधिकरणन्यायेनाऽसंजातविरोधित्वात्प्रत्यक्षमेवागमाद्बलीयः किं न स्यात् । उच्यते । यत्रैकवाक्यता प्रतीयते तत्रैकस्मिन्नर्थे पर्यवसानेन

* तथाहीति द्रा॰ पु॰ पाठः ।

† फलोपकारित्वं परमापूर्वरूपफलं प्रत्यदृष्टद्वारा कारणत्वं यथा प्रयाजादीनां संनिपत्योपकारकत्वं च यागस्वरूपोत्पादकत्वं यथा द्रव्यदेवतयोरस्तु तयोरुक्तरूपत्वमिति चेत्तत्र वक्तव्यं क्रमिकविरुद्धापच्छेदद्वयवति क्रतौ पूर्वप्रायश्चित्ताननुष्ठानगतं क्रतुवैकल्यव्याप्यत्वरूपं क्रतुवैकल्यप्रयोजकत्वं पूर्वप्रायश्चित्तगतमङ्गत्वं च द्वितीयनिमित्तजननानन्तरमप्यनुवर्तते न वेति । आद्ये क्रतुवैकल्यप्रयोजकाननुष्ठानप्रतियोग्यनुष्ठानशालित्वरूपायाः पूर्वप्रायश्चित्तकर्तव्यतायास्तत्प्रायश्चित्तगताङ्गत्वरूपकर्तव्यतायाश्चोत्तरनैमित्तिककर्तव्यतानाश्यत्वाभ्युपगमभङ्गापत्तेः । द्वितीये च पूर्वप्रायश्चित्ताननुष्ठानस्य क्रतुवैकल्यव्याप्यत्वं द्वितीयनिमित्तोपजननात्प्रागेवास्ति तज्जननानन्तरं तु नास्तीति पर्यवस्यति तथा पूर्वप्रायश्चित्तगताङ्गत्वरूपा कर्तव्यता द्वितीयनिमित्तजननात्प्रागेवास्ति पश्चात्तु नास्तीति पर्यवस्यति तथा च व्याप्यत्वकारणत्वयोः स्वाश्रये कादाचित्कत्वमभ्युपगन्तव्यं तच्च न संभवतीति तयोर्यावदाश्रयभावित्वरूपस्वाभाविकत्वनिर्वाहाय क्रमिकविरुद्धापच्छेदवत्क्रतुव्यावर्तकविशेषणमुभयत्रापि देयमित्याह । टी॰

भाव्यम् अर्थभेदे प्रतीतैकवाक्यताभङ्गप्रसङ्गात्। अतस्तत्र प्रथममसंजातप्रतिपक्षेण प्रजापतिर्वरुणायाश्वमनयदित्याद्युपक्रमेण परकृति * रूपार्थवादेन दातुरिष्टां बुद्धिमधिरोपितायां तद्विरुद्धं यावतो ऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुः-कपालान्निर्वपेदित्युपसंहारगतं पदजातमुपसंजातप्रतिपक्षत्वादयथाश्रुतार्थसमर्प-नेन † तदेकवाक्यतामप्रतिपद्यमानमेकवाक्यतानिर्वाहाय णिजर्थमन्तर्भाव्य त-दानुगुण्येनै ‡ वात्मानं लभतइत्युपक्रमस्य प्राबल्यम् । यत्र तु परस्परमेक-वाक्यता न प्रतीयते तत्रैव पूर्ववृत्तमविगणय्य § लब्धात्मकं विरुद्धार्थकं वाक्यं स्वार्थं बोधयत्येवेति न तत्र पूर्वप्रवृत्तस्य प्राबल्यम् । अत एव षोडशिग्रहवाक्यं पूर्ववृत्तमविगणय्य तदग्रहवाक्यस्यापि स्वार्थबोधकत्वमुपेयते किं तूभयोर्विष-यान्तराभावादगत्या तत्रैव विकल्पानुष्ठानमिष्यते। एवं चाद्वैतागमस्य प्रत्यक्षेणै-कवाक्यताशङ्काभावात्पूर्ववृत्तमपि तदविगणय्य स्वार्थबोधकत्वमप्रतिहतम्। तद-र्थबोधजनने च पूर्वं परमजातत्वादबाधित्वैव || जायते परस्यानन्यथोत्पा-दान्नाऽऽद्याऽबाधेन संभव इत्यपच्छेदन्यायस्यैव प्रवृत्तिर्नोपक्रमन्यायस्य । अत एव लोके ऽपि प्रथमप्रवृत्तं शुक्तिरूप्यप्रत्यक्षमाप्तोपदेशेन बाध्यतइति ॥

(-३) ननु तथाप्युपजीव्यत्वेन प्रत्यक्षस्यैव प्राबल्यं दुर्वारमपच्छेदशास्त्रयोर्हि न पूर्वं परस्योपजीव्यमिति युक्तः परेण पूर्वस्य बाध इह तु वर्णपदादिस्वरू-पग्राहकतया मिथ्यात्वबोधकमागमं प्रति प्रत्यक्षस्योपजीव्यत्वादागमस्यैव त-द्विरुद्धमिथ्यात्वाबोधकत्वरूपो बाधो युज्यते । न च मिथ्यात्वश्रुत्या वर्णपदा-दिसत्यत्वांशोपमर्द्दे ऽप्युपजीव्यस्वरूपांशोपमर्द्दाभावान्नोपजीव्यविरोध इति वा-च्यम् । नेह नानास्ति किं चनेत्यादिश्रुतिभिः स्वरूपेणैव प्रपञ्चाभावबोधनात् । अत्र के चिदाहुः । वृषमानयेत्यादिवाक्यं श्रवणदोषाद्वृषभमानयेत्यादिरूपेण श्रु-तवतो ऽपि शाब्दप्रमितिदर्शनेन शाब्दप्रमितौ वर्णपदादिप्रत्यक्षं प्रमाभ्रमसाधार-णमेवापेक्षितमित्यद्वैतागमेन वर्णपदादिप्रत्यक्षमात्र ¶ मुपजीव्य स्वरूपोपमर्द्दे ऽपि नोपजीव्यविरोध इति ॥

---

* परस्य प्रजापतेः कृतिरनुष्ठानं परकृतिः परकृतिपदं तद्बोधकवाक्यपरम् । टी॰

† समर्पणेनेति ४ पु॰ पाठः ।

‡ प्रतिग्राहयेदित्यर्थकत्वे दत्तवानित्यर्थकानयदितिपदानुगुण्यम् ।

§ अनुपजीव्येत्यर्थः ।

|| पूर्वमबाधित्वा ऽजातत्वात्परमेव जायतइति योजना । ¶ भ्रमरूपमित्यर्थः ।

अन्ये त्वाहुः। शाब्दप्रमितौ वर्णपदादिस्वरूपसिद्ध्यनपेक्षायामपि अयोग्यशब्दात्प्रमित्यनुदयाद्योग्यतास्वरूपसिद्ध्यपेक्षाऽस्ति * । तदपेक्षायामपि नोपजीव्यविरोधः नेह नानास्तीति श्रुत्या निषेधे ऽपि यावद्ब्रह्मज्ञानमनुवर्तमानस्यार्थक्रियासंवादिनो ऽसद्विलक्षणस्य प्रपञ्चस्वरूपस्याङ्गीकारात् । अन्यथा प्रत्यक्षादीनां व्यावहारिकप्रमाणानां निर्विषयत्वप्रसङ्गात् । न च स्वरूपेण निषेधे कथं प्रपञ्चस्वरूपस्यात्मलाभः निषेधस्य प्रतियोग्यप्रतिक्षेपकत्वे † व्याघातादिति वाच्यम्। शुक्तावपीदं रजतं नेदं रजतमितिप्रतीतिद्वयानुरोधेनाधिष्ठानगताध्यस्ताभावस्य बाधपर्यन्तानुवृत्तिकाऽसद्विलक्षणप्रतियोगिस्वरूपसहिष्णुत्वाभ्युपगमात् । एतेन प्रपञ्चस्य स्वरूपेण निषेधे शशशृङ्गवदसत्त्वमेव स्यादिति निरस्तम् । ब्रह्मज्ञाननिवर्त्यस्वरूपाङ्गीकारेण वैषम्यात् ‡ । न चास्याध्यस्तस्याधिष्ठाने स्वरूपेण निषेधे ऽन्यत्र तस्य स्वरूपेण निषेधः स्वतःसिद्ध इति तस्य सर्वदेशकालसंबन्धिनिषेधप्रतियोगित्वापत्त्या ऽसत्त्वं दुर्वारम् सर्वदेशकालसंबन्धिनिषेधप्रतियोगित्वमसत्त्वमित्येवासत्त्वनिर्वचनाद् विधान्तरेण तन्निर्वचनायोगादिति वाच्यम्। असतः सर्वदेशकालसंबन्धिनिषेधप्रतियोगित्वमुपगच्छता तस्य तथात्वे प्रत्यक्षस्य सर्वदेशकालयोः प्रत्यक्षीकरणायोगेन आगमस्य तादृशागमानुपलम्भेन च प्रमाणयितुमशक्यत्वात् § अनुमानमेव प्रमाणयितव्यमिति तदनुमाने यत्सद्व्यावृत्तलिङ्गं वाच्यं तस्यैव ‖ प्रथमप्रतीतस्यासत्त्वनिर्वचनोपपत्तेरित्याहुः ॥

अपरे तु नेह नानास्तीत्यादिश्रुतेः सत्यत्वेन प्रपञ्चनिषेधे एव तात्पर्यं न स्वरूपेण। स्वरूपेण निषेधस्य स्वरूपाऽप्रतिक्षेपकत्वे तस्य तन्निषेधत्वायोगात् । तत्प्रतिक्षेपकत्वे प्रत्यक्षविरोधात् । न च सत्यत्वस्यापि सन् घट इत्यादिप्रत्यक्षसिद्धत्वान्न तेनापि रूपेण निषेधो युक्त इति वाच्यम्। प्रत्यक्षस्य श्रुत्यविरोधाय सत्यत्वाभासरूपव्यावहारिकसत्यत्वविषयत्वोपपत्तेः । न चैवं सति पारमार्थिकसत्यत्वस्य ब्रह्मगतस्य प्रपञ्चे प्रसक्त्यभावात्तेन रूपेण

---

* तथा च योग्यताया उपजीव्यत्वमवर्जनीयमिति तद्विरोधः पूर्वमते आवश्यक इति भावः। टी०
† सतीति शेषः।
‡ शशशृङ्गस्य तु किमपि स्वरूपमेव नास्तीति भावः।
§ असतस्तादृशप्रतियोगित्वे प्रत्यक्षस्यागमस्य च प्रमाणयितुमशक्यत्वेनेति संबन्धः। टी०
‖ निःस्वरूपत्वस्यैव। टी०

प्रपञ्चनिषेधानुपपत्तिः । यथा शुक्तौ रजताभासप्रतीतिरेव सत्यरजतप्रसक्तिरिति तन्निषेधः अत एव नेदं रजतं किं तु तत् नेयं मदीया गौः किं तु सैव नाथ वर्त्तमानश्चैत्रः किं त्वपवरकइति निषिध्यमानस्यान्यत्र सत्त्वमवगम्यते एवं सत्यत्वाभासप्रतीतिरेव सत्यत्वप्रसक्तिरिति तन्निषेधोपपत्तेः । अतो वर्णपदयोग्यतादिस्वरूपोपमर्द्दशङ्काभावान्नोपजीव्यविरोध इत्याहुः ॥

अन्ये तु ब्रह्मणि पारमार्थिकसत्यत्वं प्रपञ्चे व्यावहारिकसत्यत्वं सत्यत्वाभासरूपं शुक्तिरजतादौ प्रातिभासिकसत्यत्वं ततोपि निकृष्टमिति * सत्तात्रैविध्यं नोपेयते अधिष्ठानब्रह्मगतपारमार्थिकसत्तानुवेधादेव † घटादिसत्त्वाभिमानोपपत्त्या ‡ सत्त्वाभासकल्पनस्य निष्प्रमाणकत्वात् । एवं च प्रपञ्चे सत्यत्वप्रतीत्य § भ्रमत्वात्तत्तादात्म्यापन्ने ब्रह्मणि तत्प्रतीतेरेवाऽविवेकेन प्रपञ्चे तत्प्रसक्त्युपपत्तेश्च सत्यत्वेन प्रपञ्चनिषेधे नोपजीव्यविरोधो न वा ऽप्रसक्तनिषेधता । न च ब्रह्मगतपारमार्थिकसत्ताऽतिरेकेण प्रपञ्चसत्त्वाभासानुपगमे व्यवहितसत्यरजतातिरेकेण शुक्तौ रजताभासोत्पत्तिः किमर्थमुपेयते इति वाच्यम् । व्यवहितस्याऽसंनिकृष्टस्यापरोक्ष्यासंभवात्तन्निर्वाहाय तदुपगमात् ॥

(४) नन्वेवं प्रतिबिम्बभ्रमस्थले ऽपि ग्रीवास्थमुखातिरेकेण दर्पणे मुखाभासोत्पत्तिरुपेया स्यात् स्वकीये ग्रीवास्थे मुखे नासाद्यवच्छिन्नप्रदेशापरोक्ष्यसंभवे ऽपि नयनगोलकललाटादिप्रदेशापरोक्ष्यायोगात् । प्रतिबिम्बभ्रमे नयनगोलकादिप्रदेशापरोक्ष्यदर्शनाच्च । न च बिम्बातिरिक्तप्रतिबिम्बाभ्युपगमे इष्टापत्तिः ब्रह्मप्रतिबिम्बजीवस्यापि ततो भेदेन मिथ्यात्वापत्तेः । अत्र विवरणानुसारिणः प्राहुः । ग्रीवास्थे || एव मुखे दर्पणोपाधिसंनिधानदोषाद्दर्पणस्थत्वप्रत्यङ्मुखत्वबिम्बभेदानामध्याससंभवान्न दर्पणे मुखाध्यासः कल्पनीयो गौरवात् । दर्पणे मुखं नास्तीति संसर्गमात्रबाधात् मिथ्यावस्त्वन्तरत्वे नेदं मुखमिति स्वरूपबाधापत्तेः । दर्पणे मम मुखं भातीति स्वमुखाभेदप्रत्यभिज्ञानाच्च । न च ग्रीवास्थमुखस्याधिष्ठानस्यापरोक्ष्यासंभव उपाधिप्रतिहतनयनरश्मीनां परावृत्य

* ब्रह्मज्ञानातिरिक्तेनापि बाध्यत्वरूपम् ।

† प्रतीतेरेवेत्यर्थः । टी०

‡ भावादेव घटादौ शुक्तिरजतादौ च सत्त्वेति द्रा० ।

§ अभ्रान्तप्रतीत्यभावादित्यर्थः ।

|| धर्मिकल्पनापेक्षया लघुधर्मकल्पनमपि लघ्विति भावः ।

बिम्बग्राहकत्वनियमाभ्युपगमा * ल्लतादिवत् † । तन्नियमानभ्युपगमे परमाणोः कुड्यादिव्यवहितस्थूलस्यापि चाक्षुषप्रतिबिम्बभ्रमप्रसङ्गात् । न चाव्यवहितस्थूलोद्भूतरूपवत एव चाक्षुषप्रतिबिम्बो नान्यस्येति नियम इति वाच्यम् । बिम्बस्यौल्योद्भूतरूपयोः क्लृप्तेन चाक्षुषज्ञानजननेनोपयोगसंभवे विधान्तरेणोपयोगकल्पनानुपपत्तेः ‡ । कुड्यादिव्यवधानस्य प्रतिहतनयनरश्मिसंबन्धविघटनं विनैवेह प्रतिबन्धकत्वे तथैव घटप्रत्यक्षादिस्थले ऽपि तस्य प्रतिबन्धकत्वसंभवेन चक्षुःसंनिकर्षमात्रस्य कारणत्वलोपप्रसङ्गाच्च । दर्पणे मिथ्यामुखाध्यासवादिनापि कारण § त्रयान्तर्गतसंस्कारसिद्ध्यर्थं नयनरश्मीनां कदाचित्परावृत्य स्वमुखग्राहकत्वकल्पनयैव पूर्वानुभवस्य समर्थनीयत्वाच्च । न च नासादिप्रदेशावच्छिन्नपूर्वानुभवादेव संस्कारोपपत्तिः तावता नयनरश्मिगोलकादिप्रतिबिम्बाध्यासानुपपत्तेः तटाकसलिले तटविटपिसमारूढाऽदृष्टचरपुरुषप्रतिबिम्बाध्यासस्थले कथमपि पूर्वानुभवस्य दुर्वचत्वात् । एवं चोपाधिप्रतिहतनयनरश्मीनां बिम्बं प्राप्य तद्ग्राहकत्वे ऽवश्यवक्तव्ये फलबलाद्दर्पणाद्यभिहतानामेव बिम्बं प्राप्य तद्ग्राहकत्वं न शिलादिप्रतिहतानामनतिस्वच्छताम्रादिप्रतिहतानां मलिनोपाधिसंबन्धदोषान्मुखसंस्थानविशेषाग्राहकत्वं साक्षात्सूर्य्ये प्रेंसूनामिवोपाधिं प्राप्य निवृत्तानां न तथा सौरतेजसा प्रतिहतिरिति प्रतिबिम्बसूर्य्यावलोकने साक्षात्तदवलोकनइव नाशक्यत्वम् । जलाद्युपाधिसंनिकर्षे केषां चिदुपाधिप्रतिहतानां बिम्बप्राप्तावपि केषां चित्तदन्तर्गतसिकतादिग्रहणमित्यादिकल्पनान्न कश्चिद्दोष इति ॥

अद्वैतविद्याकृतस्तु वस्तुप्रतिबिम्बस्य मिथ्यात्वमभ्युपगच्छतां त्रिविधजीववादिनां || विद्यारण्यगुरुप्रभृतीनामेवमभिप्रायमाहुः । चैत्रमुखाद्भेदेन तत्सदृशत्वेन पार्श्वस्थितेः स्पष्टं निरीक्ष्यमाणं दर्पणे तत्प्रतिबिम्बं ततो भिन्नं स्वरूपतो मिथ्यैव स्वकरगतादिव ¶ रजताच्छुक्तिरजतम् । न च दर्पणे

* लतादिवदिति द्रा॰ नास्ति ।

† लता यथोपरिष्टाद्गच्छन्ती प्रतिघाते सति अधः परावर्तते तद्वदित्यर्थः ।

‡ स्वाश्रयभूतद्वारा प्रतिबिम्बाध्यासोत्पत्तावुपयोगकल्पनानुपपत्तेरित्यर्थः । टी॰

§ दोषसंप्रयोगसंस्काररूपकारणत्रयेत्यर्थः । टी॰

|| पारमार्थिकव्यावहारिकप्रातिभासिकभेदेन त्रिविधो जीवः प्रथमपरिच्छेदे निरूपितः । टी॰

¶ स्वकारणगतादिति ४ पु॰ पाठः ।

मम मुखं भातीतिबिम्बाऽभेदज्ञानविरोधः स्पष्टभेदद्वित्वप्रत्यङ्मुखत्वादिज्ञानविरोधेनाऽभेदासंभवात्। दर्पणे मम मुखमिति व्यपदेशस्य स्वच्छायामुखे स्वमुखव्यपदेशवद् गौणत्वाच्च। न चाभेदज्ञानविरोधाद्भेदव्यपदेश एव गौणः किं न स्यादिति शङ्क्यम्। बालानां प्रतिबिम्बे पुरुषान्तरभ्रमस्य ह्लानोपादित्साद्यर्थक्रियापर्यन्तस्यापलपितुमशक्यत्वात्। न च प्रेक्षावतामपि स्वमुखविशेषपरिज्ञानाय दर्पणाद्युपादानदर्शनादभेदज्ञानमप्यर्थक्रियापर्यन्तमिति वाच्यम्। भेदे ऽपि प्रतिबिम्बस्य बिम्बसमानाकारत्वनियमविशेषपरिज्ञानादेव तदुपादानोपपत्तेः। यत्तु नात्र मुखमिति दर्पणे मुखसंसर्गमात्रस्य बाधो न मुखस्येति तन्न। नेदं रजतमित्यत्रापि इदमर्थे रजततादात्म्यमात्रस्य बाधो न रजतस्येत्यापत्तेः। यदि चेदमंशे रजतस्य तादात्म्येनाध्यासान्नेदं रजतमिति तादात्म्येन रजतस्यैव बाधो न तादात्म्यमात्रस्य तदा दर्पणे मुखस्य संसर्गितया ऽध्यासान्नात्र मुखमिति संसर्गितया मुखस्यैव बाधो न संसर्गमात्रस्येति तुल्यम्। यत्तु धर्मिणो ऽप्यध्यासकल्पने गौरवमिति तद्रजताभासकल्पनागौरववत्प्रामाणिकत्वान्न दोषः। स्वनेत्रगोलकादिप्रतिबिम्बभ्रमस्थले बिम्बापरोक्ष्यकल्पनोपायाभावात्। नयनरश्मीनामुपाधिप्रतिहतानां बिम्बप्राप्तिकल्पने हि दृष्टविरुद्धं बह्वा * पद्यते। कथं हि जलसंनिकर्षे केषु चिन्नयनरश्मिष्वप्रतिहतमन्तर्गच्छत्स्वन्ये जलसंबन्धेनापि प्रतिहन्यमाना नितान्तं मृदवः सकलनयनरश्मिप्रतिघातिनं किरणसमूहं विजित्य तन्मध्यगतं † सूर्यमण्डलं प्रविशेयुः। कथं च चन्द्रालोकनइव तत्प्रतिबिम्बालोकने ऽपि अमृतशीतलतद्बिम्बसंनिकर्षाविशेषे लोचनयोः शैत्याभिव्यक्त्याप्यायनं न स्यात्। कथं च जलसम्बन्धेनापि प्रतिहन्यमानाः शिलादिसंबन्धेन न प्रतिहन्येरन्। तत्प्रतिहत्य परावृत्ता वा नयनगोलकादिभिर्न संसृज्येरन्। तत्संसर्गे ‡ वा संसृष्टं किं न साक्षात्कारयेयुः। दोषेणापि हि विशेषांशग्रहणमात्रं प्रतिबध्यमानं दृश्यते न तु संनिकृष्टधर्मिस्वरूपग्रहणमपि। प्रतिमुखाध्यासपक्षे तु न किं चिद् दृष्टविरुद्धं कल्पनीयम्। तथा हि। अव्यवहितस्थूलोद्भूतरूपस्यैव चाक्षुषाध्यासदर्शनाद्बिम्बगतस्थौल्योद्भूतरूपयोः स्वाश्रयसाक्षात्कारकारणत्वेन क्लृप्त-

---

* फलबलादित्यादिना पूर्वमुक्तमित्यर्थः। † किरणसमूहमध्यगतमित्यर्थः।
‡ शिलाप्रतिघातपरावृत्तानां नयनगोलकसंसर्गे इत्यर्थः।

योः स्वाश्रयप्रतिबिम्बाध्यासे ऽपि कारणत्वम् । कुड्याद्यावरणद्रव्यस्य त्वगिन्द्रियन्यायेन प्राप्यकारितया ऽवगतनयनसंनिकर्षविघटनद्वारा व्यवहितवस्तुसाक्षात्कारप्रतिबन्धकत्वेन क्लृप्तस्य व्यवहितप्रतिबिम्बाध्यासे ऽपि विनैव द्वारान्तरं प्रतिबन्धकत्वं च कल्पनीयम् । तत्र को विरोधः क्व चित्कारणत्वादिना क्लृप्तस्य फलबलादन्यत्रापि कारणत्वादि * कल्पने । एतेनोपाधिप्रतिहतनयनरश्मीनां बिम्बप्राप्त्यनुपगमे व्यवहितस्योद्भूतरूपादिरहितस्य च चाक्षुषप्रतिबिम्बभ्रमप्रसङ्ग इति निरस्तम् । किं च तदभ्युपगमे एवोक्तदूषणप्रसङ्गः कथं साक्षात्सूर्य्यावलोकनइव विना चक्षुर्विक्षेपमवनतमौलिना निरीक्ष्यमाणे सलिले ततः प्रतिहतानां नयनरश्मीनामूर्द्ध्वमुत्प्लुत्य बिम्बसूर्य्यग्राहकत्ववत्तिर्यक्चक्षुर्विक्षेपं विना ऋजुचक्षुषा दर्पणे विलोक्यमाने तत्प्रतिहतानां पार्श्वस्थमुखग्राहकत्ववच्च वदनसाचीकरणाभावे † ऽप्युपाधिप्रतिहतानां पृष्ठभागव्यवहितग्राहकत्वं तावद् दुर्वारम् । उपाधिप्रतिहतनयनरश्मीनां प्रतिनिवृत्ति ‡ नियमं विहाय यत्र बिम्बं तत्रैव गमनोपगमात् । तथा मलिनदर्पणे श्यामतया गौरमुखप्रतिबिम्बस्थले विद्यमानस्यापि बिम्बगतगौररूपस्य चाक्षुषज्ञाने ऽनुपयोगितया पीतशङ्खभ्रमन्यायेनारोप्यरूपवैशिष्ट्येनैव बिम्बमुखस्य चाक्षुषत्वं निर्वाह्यमिति तथैव नीरूपस्यापि § दर्पणोपाधिश्यामत्ववैशिष्ट्येन चाक्षुषप्रतिबिम्बभ्रमविषयत्वमपि दुर्वारम् । स्वतो नीरूपस्यापि नभसो ऽध्यस्तनैल्यवैशिष्ट्येन चाक्षुषत्वसंप्रतिपत्तेः । तस्मात्स्वरूपतः प्रतिमुखाध्यासपक्ष एव श्रेयान् । न च तथापि पूर्वानुभवसंस्कारदौर्बल्यम् । पुरुषसामान्यानुभवसंस्कारमात्रेण स्वप्ने ऽप्यदृष्टचरपुरुषाध्यासवन्मुखसामान्यानुभवसंस्कारमात्रेण दर्पणमुखविशेषाध्यासोपपत्तेः । इयांस्तु भेदः स्वप्नेषु शुभाशुभहेत्वदृष्टानुरोधेन पुरुषाकृतिविशेषाध्यासः । इह तु बिम्बसंनिधानानुरोधेन मुखाकृतिविशेषाध्यास इति । न च प्रतिबिम्बस्य स्वरूपतो मिथ्यात्वे ब्रह्मप्रतिबिम्बस्य जीवस्यापि मिथ्यात्वापत्तिर्दोषः । प्रतिबिम्बजीवस्य तथात्वे ऽप्यवच्छिन्नजीवस्य सत्यतया मुक्तिभाक्त्वोपपत्तेरिति । यत्तु प्रतिबिम्बं दर्पणादिषु

---

* आदिपदेन प्रतिबन्धकत्वम् ।

† चक्षुषा स्वपृष्ठभागव्यवहितपदार्थग्रहणानुकूलव्यापाराभावेऽपीत्यर्थः ।

‡ नयनगोलकाभिमुखविषयप्रतिहतानां पुनर्गोलकद्वारा शरीरान्तः प्रवेशनियममित्यर्थः । टी॰

§ वाय्वादेरित्यर्थः ।

मुखच्छायाविशेषरूपतया सत्यमेवेति कस्य चिन्मतम् तन्न। छाया हि नाम शरीरादेस्तत्तदवयवैरालोके कियद्देशव्यापिन्य्ऽवरुद्धे तत्तद्देशे लब्धात्मकं तम एव। न च मौक्तिकमाणिक्यादिप्रतिबिम्बस्य तमोविरुद्धलोहितादिरूपवत्त्वस्तमोरूपच्छायात्वं युक्तम्। न वा तमोरूपच्छायारहिततपनादिप्रतिबिम्बस्य तथात्वमुपपन्नम्। ननु तर्हि प्रतिबिम्बरूपच्छायायास्तमोरूपत्वासंभवे द्रव्यान्तरत्वमस्तु क्लृप्तद्रव्यानन्तर्भावे तमो * वद्द्रव्यान्तरकल्पनोपपत्तेरिति चेत्। किं तद् द्रव्यान्तरं प्रतीयमानरूपपरिमाणसंस्थानविशेषप्रत्यङ्मुखत्वादिधर्मयुक्तं तद्रहितं वा स्यात्। अन्त्ये न तेन द्रव्यान्तरेण रूपविशेषादिघटितप्रतिबिम्बोपलम्भनिर्वाह इति व्यर्थं तत्कल्पनम्। प्रथमे कथमेकस्मिन्नल्पपरिमाणे दर्पणे युगपदसंकीर्णतया प्रतीयमानानां महापरिमाणानामनेकमुखप्रतिबिम्बानां सत्यतानिर्वाहः। कथं च निबिडावयवानुस्यूते दर्पणे तथैवावतिष्ठमाने तदन्तर्हनुनासिकाद्यनेकनिम्नोन्नतप्रदेशवतो द्रव्यान्तरस्योत्पत्तिः। किं च सितरक्तपीताद्यनेकवर्णादिमतःप्रतिबिम्बस्योत्पत्तौ दर्पणमध्ये स्थितं तत्संनिहितं न तादृशं कारणमस्ति। यद्युच्येतोपाधिमध्यविश्रान्तियोग्यपरिमाणानामेव प्रतिबिम्बानां महापरिमाणज्ञानं तादृशनिम्नोन्नतादिज्ञानं च भ्रम एव यथापूर्वं दर्पणतदवयवावस्थानाविरोधेन तादृक्प्रतिबिम्बोत्पादनसमर्थं च किं चित्कारणं परिकल्प्यमिति तर्हि शुक्तिरजतमपि सत्यमस्तु। तत्रापि यथापूर्वं स्थितायामेव तत्तादात्म्यापन्नरजतोत्पादनसमर्थं किं चित्कारणं परिकल्प्य तस्य रजतस्य दोषत्वाभिमतकारणसहकृतेन्द्रियग्राह्यत्वनियमवर्णनोपपत्तेः किं शुक्तिरजतमसत्यं प्रतिबिम्बः सत्य इत्यर्द्धजरतीन्यायेन। न च तथा सति रजतमिति दृश्यमानायाः शुक्तेरग्नौ प्रक्षेपे रजतोचितद्रवीभावापत्तिः। अनलकस्तूरिकादिप्रतिबिम्ब † स्यौष्ण्यसौरभादिराहित्यवच्छुक्तिरजतस्य द्रवीभावयोग्यताराहित्योपपत्तेः। अथोच्येत नेदं रजतं मिथ्यैव रजतमभादिति सर्वसंप्रतिपन्नबाधान्न शुक्तिरजतं सत्यमिति। तर्हि दर्पणे मुखं नास्ति मिथ्यैवात्र दर्पणे मुखमभादित्यादिसर्वसिद्धबाधात्प्रतिबिम्बमपि न सत्यमिति युक्तम्। तस्मादसंगतः प्रतिबिम्बसत्यत्ववादः॥

* तमसो द्रव्यमद्रव्यत्वस्य सिद्धान्तितत्वादिति भावः।
† त्वन्मते सत्यत्वेनाभिमतस्येति शेषः।

ननु तन्मिथ्यात्ववादो ऽप्ययुक्तः शुक्तिरजतस्येव कस्य चिदन्वयव्यतिरेकशालिनः कारणस्याज्ञानस्य * निवर्तकस्य ज्ञानस्य चानिरूपणात् । अत्र के चित् । यद्यपि सर्वात्मनाऽधिष्ठानज्ञानानन्तरमपि जायमाने प्रतिबिम्बाध्यासे नाधिष्ठानावरणमज्ञानमुपादानम् न वाऽधिष्ठानविशेषांशज्ञानं निवर्तकम् तथाप्यधिष्ठानाज्ञानस्यावरणशक्त्यंशेन निवृत्तावपि विक्षेपशक्त्यंशेनानुवृत्तिसंभवात्तदेवोपादानम् । बिम्बोपाधिसंनिधिनिवृत्तिसचिवं चाधिष्ठानज्ञानं सोपादानस्य तस्य निवर्तकमिति ॥

अन्ये तु ज्ञानस्य विक्षेपशक्त्यंशं विहायावरणशक्त्यंशमात्रनिवर्तकत्वं न स्वाभाविकम् । ब्रह्मज्ञानेन मूलाज्ञानस्य शुक्त्यादिज्ञानेनाऽवस्थाऽज्ञानस्य † चावरणशक्त्यंशमात्रनिवृत्तौ तस्य विक्षेपशक्त्या सर्वदाऽनुवृत्तिप्रसङ्गात् । न च तद्बिम्बोपाधिसंनिधिरूपविक्षेपशक्त्यंशनिवृत्तिप्रतिबन्धकप्रयुक्तं बिम्बोपाधिसंनिधानात्प्रागेव बिम्बचैत्रमुखे दर्पणसंसर्गाद्यभावे दर्पणे चैत्रमुखाभावे वा प्रत्यक्षतो ऽवगम्यमाने विक्षेपशक्त्यंशस्यापि निवृत्त्यवश्यंभावेन तत्काले तयोः संनिधाने सत्युपादानाभावेन प्रतिबिम्बभ्रमाभावप्रसङ्गात् । अतो मूलाज्ञानमेव प्रतिबिम्बाध्यासोपादानम् । न चात्राप्युक्तदोषतौल्यं पराग्विषय ‡ वृत्तिपरिणामानां स्वस्वविषयावच्छिन्नचैतन्यप्रदेशे मूलाज्ञानावरणशक्त्यंशाभिभावकत्वे ऽपि तदीयविक्षेपशक्त्यंशानिवर्तकत्वात् । अन्यथा तत्प्रदेशस्थितव्यावहारिकविक्षेपाणामपि विलयापत्तेः । न च प्रतिबिम्बस्य मूलाज्ञानकार्यत्वे व्यावहारिकत्वापत्तिः अविद्यातिरिक्तदोषाजन्यत्वस्य § व्यावहारिकत्वे प्रयोजकत्वात् । प्रकृते च तदतिरिक्तबिम्बोपाधिसंनिधिदोषसद्भावेन प्रातिभासिकत्वोपपत्तेः । न चैवं सति बिम्बोपाधिसंनिधिनिवृत्तिसहकृतस्याप्यधिष्ठानज्ञानस्य प्रतिबिम्बाध्यासानिवर्तकत्वप्रसङ्गस्तन्मूलाज्ञाननिवर्तकत्वाभावादिति वाच्यम् । विरोधाभावात् ‖ । ब्रह्माऽज्ञानानिवर्तकत्वे ऽपि तदुपादानकप्रतिबिम्बाध्यासविरो-

* अधिष्ठानसाक्षात्कारदशायामेव प्रतिबिम्बदर्शनेन तदसाक्षात्काररूपकारणस्य तत्साक्षात्काररूपनिवर्तकस्य चाभ्युपगमासंभवादित्यर्थः ।

† कार्यस्य रजताद्यज्ञानस्येत्यर्थः ।

‡ बाह्यविषयेति २ पु॰ पाठः ।

§ मूलाज्ञानकार्यत्वं व्यावहारिकत्वप्रयोजकं न भवति अनाद्यविद्यादौ तदभावेपि व्यवहारिकत्वसत्त्वात् । तदतिरिक्तदोषाजन्यत्वस्य तु तत्रापि सत्त्वान्नाव्याप्तिरिति भावः । टी॰

‖ मूलाज्ञानं ब्रह्मविषयकं प्रतिबिम्बाध्यासाधिष्ठानभूतदर्पणादिज्ञानं तु दर्पणाद्यवच्छिन्नचैतन्यविषयकमिति तयोस्समानविषयकत्वस्य विरोधप्रयोजकस्याभावेन विरोधाभावादधिष्ठानयाथात्म्यज्ञानस्य ब्रह्माज्ञानानिवर्तकत्वेपीत्यर्थः । तत्पदं ब्रह्माज्ञानपरम् । टी॰

धिविषयकतयाऽधिष्ठानयाथात्म्यज्ञानस्य प्रतिबन्धकविरहसचिवस्य तन्निवर्तकत्वोपपत्तेः । अवस्थाऽज्ञानोपादानत्वपक्षे ऽपि तस्य प्राचीनाधिष्ठानज्ञाननिवर्तितावरणशक्तिकस्य समानविषयत्वभङ्गेन प्रतिबन्धकाभावकालीनाधिष्ठानज्ञानेन निवर्तयितुमशक्यतया प्रतिबिम्बाध्यासमात्रस्यैव तन्निवर्त्यत्वस्योपेयत्वात् । अथ वा स्वो * पादानाज्ञाननिवर्तकब्रह्मज्ञाननिवर्त्य एवाऽयमध्यासो ऽस्तु । व्यावहारिकत्वापत्तिस्त्वविद्यातिरिक्तदोषजन्यत्वेन प्रत्युक्तेत्याहुः ॥

(५) एवं स्वप्नाध्यासस्याप्यनवच्छिन्नचैतन्ये ऽहंकारोपहितचैतन्ये वा ऽवस्थारूपाज्ञानशून्ये ऽध्यासात्सुषुप्त्याख्यं तमो ऽज्ञानं यद्बीजं स्वप्नबोधयोरित्याचार्याणां स्वप्नजाग्रत्प्रपञ्चयोरेकाज्ञानकार्यत्वोक्तेश्च मूलाऽज्ञानकार्य्यतया स्वोपादाननिवर्तकब्रह्मज्ञानैकबाध्यस्याविद्यातिरिक्तनिद्रादिदोषजन्यतयैव प्रातिभासिकत्वमिति केचित् ॥

अन्ये तु बाध्यन्ते चैते रथादयः स्वप्नदृष्टाः प्रबोधइतिभाष्योक्तेरविद्यात्मकबन्धप्रत्यनीकत्वाज्जाग्रद्बोधवदिति † विवरणदर्शनादुत्थितस्य स्वप्नमिथ्यात्वानुभवाच्च जाग्रद्बोधः स्वप्नाध्यासनिवर्तक इति ब्रह्मज्ञानेतरज्ञानबाध्यतयैव तस्य प्रातिभासिकत्वम् । न चाऽधिष्ठानयाथात्म्याऽगोचरं स्वोपादानाऽज्ञानानिवर्तकं ज्ञानं कथमध्यासनिवर्तकं स्यादिति वाच्यम् । रज्जुसर्पाध्यासस्य स्वोपादानाज्ञाननिवर्तकाधिष्ठानयाथात्म्यज्ञानेनेव तत्रैव स्वानन्तरोत्पन्नदण्डभ्रमेणापि निवृत्तिदर्शनादित्याहुः ॥

अपरे तु जाग्रद्भोगप्रदकर्मोपरमे सति जाग्रत्प्रपञ्चद्रष्टारं प्रतिबिम्बरूपं व्यावहारिकं जीवं तद्दृष्टं ‡ जाग्रत्प्रपञ्चमप्यावृत्य जायमानो § निद्रारूपो मूलाज्ञानस्यावस्थाभेदः स्वाप्नप्रपञ्चाध्यासस्योपादानं न मूलाज्ञानम् । न च निद्राया अवस्थाऽज्ञानरूपत्वे मानाभावः मूलाज्ञानेनानावृतस्य जाग्रत्प्रपञ्चद्रष्टुर्व्यावहारिकजीवस्य मनुष्यो ऽहं ब्राह्मणो ऽहं देवदत्तपुत्रो ऽहमित्यादिना स्वात्मानमसंदिग्धाऽविपर्य्यस्तमभिमन्यमानस्य तदीयचिरपरिचयेन तं प्रति सर्वदाऽनावृतैकरूपस्य स्वपितामहात्ययादिजाग्रत्प्रपञ्चवृत्तान्तस्य च स्वप्नकाले केन

* स्वपदं प्रतिबिम्बाध्यासपरम् । टी॰

† यथा जाग्रत्कालीनो घटादिबोधः स्वप्नबन्धनिवर्तकस्तद्वदित्यर्थः । टी॰

‡ तद्दृश्यमिति ३ पु॰ पा॰ ।

§ जीवप्रपञ्चावावृत्य भोगप्रदकर्मोपरमे सति जायमान इति योजना ।

चिदावरणाभावे जाग्रद्दशायामिव * स्वप्नेपि व्याघ्रो ऽहं शूद्रो ऽहं यज्ञदत्तपुत्रो ऽहमित्यादिभ्रमस्य स्वपितामहजीवद्दशादिभ्रमस्य चाभावप्रसङ्गेन निद्राया एव तत्कालोत्पन्नव्यावहारिकजगज्जीवावरकाज्ञानावस्थाभेदरूपत्वसिद्धेः । न चैवं जीवस्याप्यावृतत्वात् स्वप्नप्रपञ्चद्रष्टृत्वाभावप्रसङ्गः † । स्वाप्नप्रपञ्चेन सह द्रष्टुर्जीवस्यापि प्रातिभासिकाध्यासात् ‡ । एवं च पुनर्जाग्रद्भोगप्रदकर्मोद्भूते बोधे व्यावहारिकजीवस्वरूपज्ञानात्स्वोपादाननिद्रारूपाऽज्ञाननिवर्तकादेव स्वाप्नप्रपञ्चबाधः । न चैवं तद्द्रष्टुः प्रातिभासिकजीवस्यापि ततो बाधे स्वप्ने करिणमन्वभूवमित्यनुसन्धानं न स्यादिति वाच्यम् । व्यावहारिकजीवे प्रातिभासिकजीवस्याध्यस्ततया तदनुभवाद्व्यावहारिकजीवस्यानुसंधानोपगमे ऽप्यतिप्रसङ्गाभावादिति ॥

नन्वनवच्छिन्नचैतन्ये ऽहंकारावच्छिन्नचैतन्ये वा स्वाप्नप्रपञ्चाध्यास इति प्रागुक्तं पक्षद्वयमप्ययुक्तम् । आद्ये स्वाप्नगजादेरहंकारोपहितसाक्षिणो ऽविच्छिन्नदेशत्वेन सुखादिवदन्तःकरणवृत्तिसंसर्गमनपेक्ष्य तेन § प्रकाशनस्य चक्षुरादीनामुपरततया वृत्त्युदयासंभवेन तत्संसर्गमपेक्ष्य तेन प्रकाशनस्य चायोगात् । द्वितीये इदं रजतमितिवदहं गज इति वा अहं सुखीतिवदहं गजवानिति वाऽध्यासप्रसङ्गात् । अत्र के चिदाद्यपक्षं समर्थयन्ते । अहंकारानवच्छिन्नं चैतन्यं न देहाद्बहिः स्वाप्नप्रपञ्चस्याधिष्ठानमुपेयते किं तु तदन्तरेव । अत एव || दृश्यमानपरिमाणोचितदेशसंपत्त्यभावात्स्वाप्नगजादीनां मायामयत्वमुच्यते । एवं चान्तःकरणस्य देहाद्बहिरस्वातन्त्र्याज्जागरणे बाह्यशुक्तीदमंशादिगोचरवृत्त्युत्पादाय चक्षुराद्यपेक्षायामपि देहान्तरन्तःकरणस्य स्वतन्त्रस्य स्वयमेव वृत्तिसंभवाद्देहान्तरन्तःकरणवृत्त्यभिव्यक्तस्यानवच्छिन्नचैतन्यस्याधिष्ठानत्वे न का चिदनुपपत्तिः । अत एव यथा जागरणे संप्रयोगजन्यवृत्त्यभिव्यक्तशुक्तीदमंशावच्छिन्नचैतन्यस्थिताऽविद्या रूप्याकारेण विवर्तते ¶ तथा स्वप्नेपि देहस्यान्तरन्तःकरणवृत्तौ निद्रादिदोषोपेतायामभिव्यक्त-

---

* जागरणे इवेति द्रा० ।  † द्रष्टुरभावप्रसङ्ग इति ३ पु० पाठः ।

‡ अस्मिन् मते व्यावहारिको जीवः स्वप्नप्रपञ्चद्रष्टुः प्रातिभासिकजीवस्याधिष्ठानम् । टी०

§ साक्षिणा । उत्तरत्रापि तथैव ।

|| आन्तरचैतन्यस्यैवाधिष्ठानत्वोपगमादेवेत्यर्थः ।

¶ परिणमत इत्यर्थः । टी०

चैतन्यस्याऽविद्या ऽदृष्टोद्बोधिता नानाविषयसंस्कारसहिता प्रपञ्चाकारेण विवर्ततामिति विवरणोपन्यासे भारतीतीर्थवचनमिति ॥

अन्ये त्वनवच्छिन्नचैतन्यं न वृत्त्यभिव्यक्तं सत् स्वाप्नप्रपञ्चस्याधिष्ठानम् अशब्दमूलका * नवच्छिन्नचैतन्यगोचरवृत्त्युदयाऽसंभवाद् अहंकाराद्यवच्छिन्नचैतन्यएवाहमाकारवृत्त्युदयदर्शनात् । तस्मात्स्वतो ऽपरोक्षमहंकाराद्यनवच्छिन्नं चैतन्यं † तदधिष्ठानम् । अत एव संक्षेपशारीरके अपरोक्षरूपविषयभ्रमधीरपरोक्षमास्पदमपेक्ष्य भवेत् । मनसा स्वतो नयनतो यदि वा स्वपनभ्रमादिषु तथा प्रथितेः । इतिश्लोकेनापरोक्षाध्यासापेक्षितमधिष्ठानापरोक्ष्यं क्व चित्स्वतः क्व चिन्मानसवृत्त्या क्व चिद्बहिरिन्द्रियवृत्त्येत्यभिधाय स्वतो ऽपरोक्षा चितिरत्र विभ्रम ‡ स्तथापि रूपाकृतिरेव जायते । मनो निमित्तं स्वपने मुहुर्मुहुर्विनापि चक्षुर्विषयं स्वमास्पदम् । मनोऽवगम्ये ऽप्यपरोक्षताबलात्तथा ऽऽम्बरे रूपमुपोल्लिखन् भ्रमः । सितादिभेदैर्बहुधा समीक्ष्यते यथाऽक्षगम्ये रजतादिविभ्रम ‡ इत्याद्यनन्तरश्लोकेन स्वप्नाध्यासे स्वतो ऽधिष्ठानापरोक्ष्यमुदाहृतम् । न चाहंकारानवच्छिन्नचैतन्यमात्रमावृतमिति वृत्तिमन्तरेण § न तदभिव्यक्तिरिति वाच्यम् । ब्रह्मचैतन्यमेवावृतमविद्याप्रतिबिम्बजीवचैतन्यमहंकारानवच्छिन्नमप्यनावृतमित्यभ्युपगमात् । एवं चाहंकारानवच्छिन्नचैतन्ये ऽध्यस्यमाने स्वाप्नगजादौ तत्समनियताधिष्ठानगोचरान्तःकरणादिवृत्तिकृताऽभेदाभिव्यक्त्या प्रमातृचैतन्यस्यापीदं पश्यामीति व्यवहार इत्याहुः ॥

अपरे तु द्वितीयपक्षं समर्थयन्ते । अहंकारावच्छिन्नचैतन्यमधिष्ठानमित्यहंकारस्य विशेषणभावेनाधिष्ठानकोटिप्रवेशो नापेयते किं त्वहंकारोपहितं तत्प्रतिबिम्बरूपचैतन्यमात्रमधिष्ठानमित्यतो नाहं गज इत्याद्यनुभवप्रसङ्ग इति । एवं शुक्तिरजतमपि शुक्तीदमंशावच्छिन्नचैतन्यप्रतिबिम्बे वृत्तिमदन्तःकरणगते ऽध्यस्यते शुक्तीदमंशावच्छिन्नबिम्बचैतन्ये सर्वसाधारणे तस्याध्यासे सुखादिवदनन्यवेद्यत्वाभावप्रसङ्गादिति के चित् ‖ ॥

* शुद्धब्रह्मण इवेश्वरचैतन्यस्यापि शास्त्रैकसमधिगम्यत्वादिति भावः । टी· मूलकेति वृत्त्यन्वयि । † पूर्वमतइवान्तरमेवेति शेषः । टी·

‡ ‡ एतन्मध्यस्थं २ । ३ पु· नास्ति ।

§ वृत्तिरप्यनवच्छिन्नगोचरशब्दमन्तरेण न संभवतीति प्रागुक्तमिति ध्येयम् । टी·

‖ के चिदिति ३ पु· नास्ति ।

केचित्तु बिम्बचैतन्यएव तदध्यासमुपेत्य यदीयाज्ञानोपादानकं यत्तत्तस्यैव प्रत्यक्षं न जीवान्तरस्येत्यनन्यवेद्यत्वमुपपादयन्ति ॥

ननु शुक्तिरजताध्यासे चाक्षुषत्वानुभवः साक्षाद्वाऽधिष्ठानज्ञानद्वारा तदपेक्षणाद्वा* समर्थ्यते स्वाप्नगजादिचाक्षुषत्वानुभवः कथं समर्थनीयः। उच्यते। न तावत्तत्समर्थनाय स्वाप्नदेहवद्विषयवच्चेन्द्रियाणामपि प्रातिभासिको विवर्त्तः शक्यते वक्तुं प्रतिभासिकस्याज्ञातसत्त्वाभावात्। इन्द्रियाणां चातीन्द्रियाणां सत्त्वे अज्ञातसत्त्वस्य† वाच्यत्वात्। नापि व्यावहारिकाणामेवेन्द्रियाणां स्वस्वगोलकेभ्यो निष्क्रम्य स्वाप्नदेहमाश्रित्य स्वस्वविषयग्राहकत्वं वक्तुं शक्यते स्वप्नसमये तेषां व्यापारराहित्यरूपोपरतिश्रवणात्। व्यावहारिकस्य स्पर्शनेन्द्रियस्य स्वोचितव्यावहारिकदेशसंपत्तिविधुरे ऽन्तःशरीरे स्वाधिकपरिमाणकृत्स्नस्वाप्नशरीरव्यापित्वायोगाच्च। तदेकदेशाश्रयत्वे च तस्य स्वाप्नजलावगाहनजन्यसर्वाङ्गीणशीतस्पर्शाऽनिर्वाहात्। अत एव स्वप्ने जाग्रदिन्द्रियाणामुपरतावपि तैजसव्यवहारोपयुक्तानि‡ सूक्ष्मशरीरावयवभूतानि सूक्ष्मेन्द्रियाणि सन्तीति तैः स्वाप्नपदार्थानामैन्द्रियकत्वमित्युपपादनशङ्कापि निरस्ता। जाग्रदिन्द्रियव्यतिरिक्तसूक्ष्मेन्द्रियाऽप्रसिद्धेः। किं चाऽयं पुरुषः स्वयंज्योतिरिति जागरे आदित्यादिज्योतिर्व्यतिकराच्चक्षुरादिवृत्तिसंचाराच्च दुर्विवेकमात्मनः स्वयंज्योतिष्ट्वमिति स्वप्नावस्थामधिकृत्य तत्रात्मनः स्वयंज्योतिष्ट्वं प्रतिपादयति। अन्यथा तस्य सर्वदा स्वयंज्योतिष्ट्वे ऽचेति वैयर्थ्यात्। तत्र यदि स्वप्ने ऽपि चक्षुरादिवृत्तिसंचारः कल्प्येत तदा तत्रापि जागरे इव तस्य स्वयंज्योतिष्ट्वं दुर्विवेकं स्याद् इत्युदाहृता श्रुतिः पीड्येत। ननु स्वप्ने चक्षुराद्युपरमकल्पने ऽप्यन्तःकरणमनुपरतमास्तइति परिशेषा§ऽसिद्धेर्न स्वयंज्योतिष्ट्वविवेकः। मैवम्। कर्त्ता शास्त्रार्थवत्त्वा॥दित्यधिकरणे न्यायनिर्णयोक्त¶रीत्यान्तः-

---

* चक्षुरपेक्षणादित्यर्थः।

† अप्रत्यक्षत्वविशिष्टसत्त्वस्येत्यर्थः। व्यावहारिकेन्द्रियाणामतीन्द्रियत्वात्प्रातिभासिकानामपि तथात्वमुचितं दृष्टानुसारित्वात्कल्पनाया इति भावः।

‡ आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण इत्युक्त्या तैजसाख्यस्वप्नावस्थागतजीवत्वव्यवहारोपयोगिकानीति भावः।

§ तथा च मनस एव स्वाप्नजगद्भासकत्वसंभवादवभासकान्तराभावरूपपरिशेषसिद्धिरित्यर्थः। टी॰

॥ व्या॰ सू॰ अ॰ २ पा॰ ३ सू॰ ३३।

¶ मनस उपादानत्वेन स्वतो ज्ञानकारणत्वं न संभवतीत्युक्तरीत्येत्यर्थः। टी॰

करणस्य चक्षुरादिकरणान्तरनिरपेक्षस्य ज्ञानाऽसाधनत्वाद्वा तत्त्वप्रदीपिकोक्तरीत्या * स्वप्ने तस्यैव गजाद्याकारेण परिणामेन ज्ञानकर्मतयाऽवस्थितत्वेन तदानीं ज्ञानसाधनत्वायोगाद् वा परिशेषोपपत्तेः । न च स्वप्ने ऽन्तःकरणवृत्त्यभावे उत्थितस्य स्वप्नदृष्टगजाद्यनुसंधानानुपपत्तिः । सुषुप्तिकृप्तया ऽविद्यावृत्त्या तदुपपत्तेः । सुषुप्तौ तदवस्थोपहितमेव स्वरूपचैतन्यमज्ञानसुखादिप्रकाशः उत्थितस्यानुसंधानमुपाधिभूतावस्थाविनाशजन्यसंस्कारेणेति वेदान्तकौमुद्यभिमते सुषुप्तावविद्यावृत्त्यभावपक्षे इहापि स्वाप्नगजादिभासकचैतन्योपाधिभूतस्वप्नावस्थाविनाशजन्यसंस्कारादनुसंधानोपपत्तेश्च । अथ वा तदेतत्सत्त्वं येन स्वप्नं पश्यतीत्यादिश्रुतेरस्तु स्वप्नेपि कल्पतरूक्तरीत्या स्वाप्नगजादिगोचरान्तःकरणवृत्तिः । न च तावता परिशेषासिद्धिः अन्तःकरणस्याहमिति गृह्यमाणस्य सर्वात्मना जीवैक्येनाध्यस्ततया लोकदृष्ट्या तस्य तद्व्यतिरेकाप्रसिद्धेः परिशेषार्थं चक्षुरादिव्यापाराभावमात्रस्यैवापेक्षितत्वात् । प्रसिद्धदृश्यमात्रं दृगवभासयोग्यमिति निश्चयसत्त्वेन परिशेषार्थमन्यानपेक्षणात् । तस्मात् स्वप्ने सर्वथापि चक्षुरादिव्यापारासंभवात्स्वाप्नगजादौ चाक्षुषत्वाद्यनुभवो भ्रम एव । ननु † स्वप्ने ऽपि चक्षुरुन्मीलने गजाद्यनुभवस्तन्निमीलने नेति जागरइव गजाद्यनुभवस्य चक्षुरुन्मीलनाद्यनुविधानं प्रतीयतइति चेच् चक्षुषा रजतं पश्यामीत्यनुभववदयमपि कश्चित्स्वाप्नभ्रमो भविष्यति । यत्केवलसाक्षिरूपे स्वाप्नगजाद्यनुभवे चक्षुराद्यनुविधानं तदनुविधायिनी वृत्तिर्वाऽध्यस्यते किमिव हि दुर्घटमपि भ्रमं माया न करोति विशेषतो निद्रारूपेण परिणत यस्या माहात्म्यात्स्वप्ने रथः प्रतीतः क्षणेन मनुष्यः प्रतीयते स च क्षणेन मार्जारः स्वप्नद्रष्टुश्च न पूर्वापरविरोधानुसंधानम् । तस्मादन्वयाद्यनुविधानप्रतीतितौल्येपि जाग्रद्गजाद्यनुभव एव चक्षुरादिजन्यो न स्वाप्नगजाद्यनुभवः ॥

दृष्टिसृष्टिवादिनस्तु कल्पितस्याज्ञातसत्त्वमनुपपन्न ‡ मिति कृत्स्नस्य जाग्रत्प्रपञ्चस्य दृष्टिसमसमयां सृष्टिमुपेत्य घटादिदृष्टेश्चक्षुःसंनिकर्षानुविधान

* स्वप्ने मनस एव विविधसंस्कारविशिष्टस्य स्वप्नप्रपञ्चाकारेण परिणामित्वं न त्वविद्यायास्तस्याः संस्काराश्रयत्वाभावेन विचित्रपदार्थपरिणामित्वायोगादित्युक्तरीत्येत्यर्थः । टी॰

† नन्विति १ । ३ पु॰ नास्ति ।

‡ कल्पनामात्रशरीरस्य पर्वतादावनुमितेः पूर्वं वह्न्यादेरिवाज्ञातस्य सत्त्वमनुपपन्नमित्यर्थः

प्रतीतिं दृष्टेः पूर्वं घटाद्यभावेनासंगच्छमानां स्वप्नवदेव समर्थयमाना जाग्रद्गाद्यनुभवोपि न चाक्षुष इत्याहुः ॥

ननु दृष्टिसृष्टिमवलम्ब्य कृत्स्नस्य जाग्रत्प्रपञ्चस्य कल्पितत्वोपगमे कः कल्पको निरुपाधिरात्मा वा ऽविद्योपहितो वा । नाद्यः । मोक्षे ऽपि साधनान्तरनिरपेक्षस्य कल्पकस्य सत्त्वेन प्रपञ्चानुवृत्त्या संसाराविशेषप्रसङ्गात् । न द्वितीयः । अविद्याया अपि कल्पनीयत्वेन तत्कल्पनात्प्रागेव कल्पकसिद्धेर्वक्तव्यत्वात् । अत्र केचिदाहुः । पूर्वपूर्वकल्पिताऽविद्योपहित उत्तरोत्तराऽविद्याकल्पकः । अनिदंप्रथमत्वाच्च * कल्पककल्पनाप्रवाहस्य नानवस्थादोषः । न चाऽविद्याया अनादित्वोपगमाच्छुक्तिरजतवत् कल्पितत्वं न युज्यते अन्यथा साद्यनादिविभागानुपपत्तेरिति वाच्यम् । यथा स्वप्ने कल्प्यमानं गोपुरादि किंचित्पूर्वसिद्धत्वेन कल्प्यते किंचित्तदानीमुत्पाद्यत्वेन एवं जागरेपि किंचित्कल्प्यमानं सादित्वेन कल्प्यते किंचिदन्यथेत्येतावता † साद्यनादिविभागोपपत्तेः । एतेन कार्यकारणविभागो ऽपि ‡ व्याख्यात इति ॥

अन्ये तु वस्तुतो § ऽनाद्येवाविद्यादि तच्च दृष्टिसृष्टिर्नापेयते किं तु ततो ऽन्यच्च प्रपञ्चमात्रइत्याहुः ॥

नन्वेवमपि श्रुतिमात्रप्रतीतस्य वियदादिसर्गतत्क्रमादेः कः कल्पकः । न कोपि । किमालम्बना तर्ह्यात्मन आकाशः संभूत इत्यादिश्रुतिः । निष्प्रपञ्चब्रह्मात्मैक्यावलम्बनेत्यवेहि । अध्यारोपापवादाभ्यां निष्प्रपञ्चब्रह्मप्रतिपत्तिर्भवतीति तत्प्रतिपत्त्युपायतया श्रुतिषु सृष्टिप्रलयोपन्यासो न तात्पर्येणेति भाष्याद्युद्घोषः । व्यर्थस्तर्हि तात्पर्याभावेपि वियत्प्राणपादयोर्वियदादिसर्गतत्क्रमादिविषयश्रुतीनां परस्परविरोधपरिहाराय यत्नः । न व्यर्थः न्यायव्युत्पत्त्यर्थमभ्युपेत्य तत्प्रवृत्तेः । उक्तं हि शास्त्रदर्पणे श्रुतीनां सृष्टितात्पर्य्यं

---

* बीजाङ्कुरन्यायेनानादित्वादित्यर्थः ।

† किं चिदविद्यादिकमन्यथा ऽनादित्वेन कल्प्यते पूर्वपूर्वाविद्योपहितेनात्मनेत्यर्थः । तावता कल्पनामेिभेदा । टी॰

‡ कार्यकारणादिविभागो ऽपीति १ । ३ पु॰ पाठः ।

§ स्वरूपत इत्यर्थः । तस्या अस्मदादिभिरज्ञाताया अपि सत्त्वमभ्युपगम्यतइत्यर्थः । न चैतावता द्वैतापत्तिः ब्रह्मज्ञानबाध्यतारूपमिथ्यात्वस्य तत्रोपगमेनार्थक्रियाकारित्वरूपस्य शुक्तिरजतादिविलक्षणस्य सत्त्वस्य तत्राभ्युपगमेप्यदोषादिति भावः ।

स्वीकृत्येदमिहेरितम् ब्रह्मात्मैक्यपरत्वात्तु तासां तत्रैव * विद्यतइति । ज्योतिष्टोमादिश्रुतिबोधितानुष्ठानात्फलसिद्धिः स्वाप्नश्रुतिबोधितानुष्ठानप्रयुक्तफलसंघादतुल्या । ज्योतिष्टोमादिश्रुतीनां च सत्त्वशुद्धिद्वारा ब्रह्मणि तात्पर्यान्नाप्रामाण्यमित्यादिदृष्टिसृष्टिवादव्युत्पादनप्रक्रिया । प्रपञ्चस्त्वाकरे † एव द्रष्टव्यः । अयमेको दृष्टिसमसमया ‡ विश्वसृष्टिरिति दृष्टिसृष्टिवादः ॥

अन्यस्तु दृष्टिरेव विश्वसृष्टिः § दृश्यस्य दृष्टिभेदे प्रमाणाभावात् । ज्ञानस्वरूपमेवाहुर्जगदेतद्विचक्षणाः अर्थस्वरूपं भ्राम्यन्तः पश्यन्त्यन्ये कुदृष्टय इति स्मृतेश्चेतिसिद्धान्तमुक्तावल्यादिदर्शितो दृष्टिसृष्ट्यादिवादः ॥

द्विविधे ऽपि दृष्टिसृष्टिवादे मनःप्रत्ययमलभमानाः ‖ केचिदाचार्य्याः सृष्टेर्दृष्टिवादं ¶ रोचयन्ते । श्रुतिदर्शितेन क्रमेण परमेश्वरसृष्टमज्ञातसत्तायुक्तमेव विश्वं तत्तद्विषयप्रमाणावतरणे तस्य तस्य दृष्टिसिद्धिरिति । न चैवं प्रपञ्चस्य कल्पितत्वाभावे श्रुत्यादिप्रतिपन्नसृष्टिप्रलयादिमतः प्रत्यक्षादिप्रतिपन्नार्थक्रियाकारिणश्च तस्य सत्यत्वमेवाभ्युपगतं स्यादिति वाच्यम् । शुक्तिरजतादिवत्संप्रयोगसंस्कारदोषरूपेणाधिष्ठानज्ञानसंस्कारदोषरूपेण वा कारणत्रयेणाजन्यतया कल्पनासमसमयत्वाभावे ऽपि ज्ञानैकनिवर्त्यत्वरूपस्य सदसद्विलक्षणत्वरूपस्य प्रतिपन्नोपाधिगतत्रैकालिकनिषेधप्रतियोगित्वरूपस्य वा मिथ्यात्वस्याभ्युपगमात् । सत्यत्वपक्षे प्रपञ्चे उक्तरूपमिथ्यात्वाभावेन ततो भेदात् ॥

नन्वेवमहंकारतद्धर्माणामप्युक्तरूपमिथ्यात्वं वियदादिवत्कल्पितत्वाभावे ऽपि सिद्ध्यतीतिभाष्यटीकाविवरणेषु तदध्यासे कारणत्रितयसंपादनादिश्रमो व्यर्थ इति चेद् अहंकारादीनामपि केवलसाक्षिवेद्यतया ** शुक्तिरजतवत् प्रातिभासिकत्वमभिमतमिति †† चित्सुखाचार्य्याः ॥

---

* श्रुतीनां तात्पर्यमित्यर्थः । † आकरग्रन्थेष्विति द्रा॰ पाठः ।

‡ दृष्टिकाले तदतिरिक्ता प्रत्यक्षं प्रति विषयस्य कारणत्वसिद्धान्तं परित्रातुं स्वीकृत सृष्टिरिति भावः ।

§ दृष्टिर्दर्शनं स्वप्रकाशज्ञानस्वरूपमित्यर्थः । एतदुक्तं भवति । दृश्यप्रपञ्चतादात्म्यापन्नज्ञानस्वरूपमेव प्रपञ्चस्याद्यक्षणावच्छिन्नं सत्तस्य सृष्टिरुच्यतइति । टी॰

‖ प्रत्यक्षं प्रति विषयस्य कारणत्वात्प्रपञ्चस्य ज्ञानसमसमयत्वं न युज्यते । कार्यकारणभावस्य भेदनिबन्धनत्वाच्च नाभेदइति सृष्टिपूर्वकं दृष्टिरभ्युपगम्येति भावः ।

¶ सृष्टिदृष्टिवादमिति २ । ३ पु॰ पाठः । ** तेनाज्ञातसत्त्वं न संभवतीति भावः

†† भाष्यकारादीनामिति शेषः । टी॰

अभ्युपेत्यवादमात्रं तदद्वितीयाधिष्ठानब्रह्मात्मप्रमाणस्य चैतन्यस्ये-त्यादितत्त्यकारणत्रितयसंपादनग्रन्थस्य * चैतन्यस्य प्रमाकरणत्वे वेदान्तकरणत्वादिकल्पनाभङ्गप्रसङ्गेन प्रौढिवादस्य स्फुटत्वादिति रामाद्वयाचार्य्याः ॥

ननु दृष्टिसृष्टिवादे सृष्टिदृष्टिवादे च मिथ्यात्वसंप्रतिपत्तेः कथं मिथ्याभूतस्यार्थक्रियाकारित्वम् । स्वप्नवदिति ब्रूमः । ननु स्वाप्नजलादिसाध्यावगाहनादिरूपार्थक्रिया असत्यैव किं तु जाग्रज्जलादिसाध्या सा सत्या अविशिष्टमुभयत्रापि स्व † समानसत्ताकार्थक्रियाकारित्वमिति केचित् ॥

अद्वैतविद्याचार्य्यास्त्वाहुः । स्वाप्नपदार्थानां न केवलं प्रबोधबाध्यार्थक्रियामात्रकारित्वं स्वाप्नाङ्गनाभुजङ्गमादीनां तदबाध्यसुखभयादिजनकत्वस्यापि दर्शनात् । स्वाप्नविषयजन्यस्यापि हि सुखभयादेः प्रबोधानन्तरं न बाधोऽनुभूयते प्रत्युत प्रबोधानन्तरमपि मनःप्रसादशरीरकम्पादिना सह तदनुवृत्तिदर्शनात्प्रागपि सत्त्व ‡ मेवावसीयते । अत एव प्राणिनां पुनरपि सुखजनकविषयगोचरस्वप्ने वाञ्छा अतादृशे स्वप्ने च प्रद्वेषः । संभवति च स्वप्ने ज्ञानवदन्तःकरणवृत्तिरूपस्य सुखभयादेरुदयः । न च स्वप्नाङ्गनादिज्ञानमेव सुखादिजनकं तच्च सदेवेति वाच्यम् । तस्यापि दर्शनस्पर्शनादिरूपस्य स्वप्नप्रपञ्चसाक्षिण्यध्यस्तस्य कल्पनामात्रसिद्धत्वात् । न ह्युपरतेन्द्रियस्य चक्षुरादिवृत्तयः सत्या भवन्ति । न च तद्विषयाऽऽपरोक्ष्यमात्रं सुखजनकं तच्च साक्षिरूपं सदेवेति वाच्यम् । दर्शनात्स्पर्शने कामिन्याः पदा स्पर्शनात् पाणिना स्पर्शने भुजङ्गस्यामर्मस्थले स्पर्शनान्मर्मस्थले स्पर्शनेन च सुखविशेषस्य भयविशेषस्य चाऽनुभवसिद्धत्वेन स्वप्ने ऽपि तत्तत्सुखभयादिविशेषस्य कल्पितदर्शनस्पर्शनादि § विशेषजन्यत्वस्य वक्तव्यत्वादिति । तथा जागरे घटादिप्रकाशनसमर्थत्यपुरुषान्तरनिरीक्ष्यमाणालोकवत्यपवरके ‖ सद्यः प्रविष्टेन कल्पितस्य सन्तमसस्य प्रसिद्धसन्तमसोचितार्थक्रियाकारित्वं दृष्टं येन तं प्रति घटाद्यावरणं दीपाद्यानयने तदपसरणं तन्नयने पुनरावरणमित्यादिदर्शनादित्यपि केचित् ॥

* ग्रन्थस्य प्रौढिवादतायाः स्फुटत्वादिति संबन्धः ।

† स्वपदमर्थक्रियाहेतुभूतवस्तुपरम् । टी॰

‡ स्वप्नकालीनमपि सुखभयादिकं जाग्रत्सुखादिवद् व्यावहारिकसत्यमेव न प्रातिभासिकं प्रबोधानन्तरं बाधाभावात्तदनन्तरमप्यनुवर्तमानत्वाच्चेति निष्कर्षः । टी॰

§ वृत्तीत्यधिकं ३ पु॰ ।

‖ स्वल्पमहे । टी॰

अन्ये तु पानावगाहनाद्यर्थक्रियायां जलादिस्वरूपमात्रमुपयोगि न तद्गतं सत्यत्वं तस्य कारणत्वतदवच्छेदकत्वयोरभावा * दिति किं तेन । न चैवं सति मरुमरीचिकोदकशुक्तिरजतादेरपि प्रसिद्धोदकाद्युचितार्थक्रियाकारित्वप्रसङ्गः । मरीचिकोदकादावुदकत्वादिजातिर्नास्तीति तद्विषयकभ्रमस्योदकशब्दोल्लेखित्वं तदुल्लेखिपूर्वानुभवसंस्कारजन्यत्वप्रयुक्तमिति तत्त्वशुद्धिकारादिमते तत्तदर्थक्रियाप्रयोजकोदकत्वादिजात्यभावादेव तदप्रसङ्गात् । तथाप्युदकत्वादिजातिरस्त्यन्यथा तद्वैशिष्ट्योल्लेखिभ्रमविरोधादुदकाद्यर्थिनस्तत्र प्रवृत्त्यभावप्रसङ्गाच्चेति प्रातिभासिके पूर्वदृष्टसजातीयव्यवहारानुरोधिनां मते क्व चिदधिष्ठानविशेषज्ञाने समूलाध्यासनाशात् † क्व चिदधिष्ठानसामान्यज्ञानोपरमेण केवलाध्यासनाशात् क्व चिद् गुञ्जादौ चक्षुषा वह्न्याद्यध्यासस्थले दाहपाकत्वादिप्रयोजकस्योष्णस्पर्शादेरनध्यासाच्च तत्र तत्रार्थक्रियाभावोपपत्तेः । क्व चित्कासां चिदर्थक्रियाणामिष्यमाणत्वाच्च । मरीचिकोदकादिव्यावर्तकस्यार्थक्रियोपयोगिरूपस्य वक्तव्यत्वे च श्रुतिविरुद्धं प्रत्यक्षादिना दुर्ग्रहं त्रिकालाबाध्यत्वं विहाय दोषविशेषाजन्यरजतत्वादेरेव रजताद्युचितार्थक्रियोपयोगिरूपस्य वक्तुं शक्यत्वाच्च । तस्मान्मिथ्यात्वे ऽप्यर्थक्रियाकारित्वसंभवान्मिथ्यैव प्रपञ्चो न सत्य इति ॥

(६) ननु मिथ्यात्वस्य प्रपञ्चधर्मस्य सत्यत्वे ब्रह्माद्वैतक्षतेस्तदपि मिथ्यैव वक्तव्यमिति कुतः प्रपञ्चस्य सत्यत्वक्षतिः । मिथ्याभूतं ब्रह्मणः सप्रपञ्चत्वं न निष्प्रपञ्चत्वविरोधीति त्वदुक्तरीत्या मिथ्याभूतमिथ्यात्वस्य सत्यत्वाविरोधित्वात् । अत्रोक्तमद्वैतदीपिकायाम् । वियदादिप्रपञ्चसमानस्वभावं ‡ मिथ्यात्वम् । तच्च धर्मिणः सत्यत्वप्रतिक्षेपकं धर्मस्य स्वविरुद्धधर्मप्रतिक्षेपकत्वे हि उभयवादिसिद्धं धर्मिसमसत्त्वं तन्त्रं § न पारमार्थिकत्वम् । अघटत्वादिप्रति-

* स्वरूपातिरिक्तत्वेन कारणत्वाभावादतिप्रसक्तत्वेन कारणतावच्छेदकत्वाभावाच्चेत्यर्थः । टी॰

† दूरे मरुमरीचिकाभ्रमानन्तरं स्नानार्थं समीपगतस्य नेदं जलं मरीचिमात्रमिदमिति विशेषदर्शने सति जलाद्यध्यासस्य स्वमूलाज्ञानेन सहैव नाशाद् न ततोऽर्थक्रियोत्पत्तिरापादयितुं शक्येत्यर्थः । टी॰ समूलाध्यासनिवृत्तिसंभवादिति २ पु॰ पाठः ।

‡ समानसत्ताकमित्यर्थः । वियदादिप्रपञ्चस्य च व्यावहारिकसत्ताक इति भावः । टी॰

§ घटत्वादौ परमतरीत्या पारमार्थिकत्वरूपं सत्यत्वमस्ति तथा धर्मिसमानसत्ताकत्वं मतद्वयसंमतमस्ति तथा च घटत्वादिधर्मस्य स्वाश्रये स्वविरुद्धधर्मप्रतिक्षेपकत्वे प्रयोजकाकाङ्क्षायां संप्रतिपन्नमेव प्रयोजकं कल्पनीयमिति भावः । टी॰

क्षेपके घटत्वादावस्माकं पारमार्थिकत्वासंप्रतिपत्तेः । ब्रह्मणः सप्रपञ्चत्वं न धर्मिसमसत्ताकमिति न निष्प्रपञ्चत्वप्रतिक्षेपकम् । अत एव मिथ्यात्वस्य व्यावहारिकत्वे * तद्विरोधिनो ऽप्रातिभासिकस्य † प्रपञ्चसत्यत्वस्य पारमार्थिकत्वं स्यादिति निरस्तम् । धर्मिसमसत्ताकस्य मिथ्यात्वस्य व्यावहारिकत्वे धर्मिणोपि व्यावहारिकत्वनियमात् । अथ वा ‡ यो यस्य स्वविषयसाक्षात्कारा ऽनिवर्त्यो धर्मः स तत्र स्वविरुद्धधर्मप्रतिक्षेपकः शुक्तौ शुक्तितादात्म्यं तद्विषयसाक्षात्कारा ऽनिवर्त्यमशुक्तित्वविरोधि तत्रैव रजततादात्म्यं तन्निवर्त्यं रजतभेदाविरोधीति § व्यवस्थादर्शनात् । एवं च मिथ्यात्वं कल्पितमपि प्रपञ्चसाक्षात्कारानिवर्त्यमिति सत्यत्वप्रतिक्षेपकमेव । ब्रह्मणः सप्रपञ्चत्वं तु ब्रह्मसाक्षात्कारनिवर्त्यमिति न निष्प्रपञ्चत्वप्रतिक्षेपकमिति । एतेन शब्दगम्यस्य ब्रह्मणः सत्यत्वे शब्दयोग्यतायाः शाब्दधीप्रामाण्यस्य च सत्यत्वं वक्तव्यम् प्रातिभासिकयोग्यतावता ऽनाप्तवाक्येन व्यावहारिकार्थस्य व्यावहारिकयोग्यतावता ऽग्निहोत्रादिवाक्येन तात्त्विकार्थस्य वा सिद्ध्यभावेन योग्यतासमानसत्ताकस्यैव शब्दार्थस्य सिद्धिनियमात् । अर्थाबाधरूपप्रामाण्यस्यासत्यत्वे ऽर्थस्य सत्यत्वा ऽयोगाच्च । तथा च ब्रह्मातिरिक्तसत्यवस्तुसत्त्वेन द्वैतावश्यंभाव इति वियदादिप्रपञ्चोपि सत्यो ऽस्तीति निरस्तम् । व्यावहारिकस्यार्थक्रियाकारित्वस्य व्यवस्थापितत्वेन व्यावहारिकयोग्यताया || अपि सत्यब्रह्मसिद्धिसंभवात् । ब्रह्मपरे वेदान्ते सत्यादिपदसत्त्वाद् ब्रह्मसत्यत्वसिद्धेः । अग्निहोत्रादिवाक्ये तादृशपदाभावात्तत्सत्त्वेपि प्रबलब्रह्माद्वैतश्रुतिविरोधात्तदसिद्धिरित्येव वैषम्योपपत्तेः । शब्दार्थयोग्यतयोः समानसत्ताकत्वनियमस्य निष्प्रमाणकत्वात् । घटज्ञानप्रामाण्यस्याघटत्ववत् सत्यभूतब्रह्मज्ञानप्रामाण्यस्यापि तदतिरिक्तघटितत्वेन मिथ्यात्वोपपत्तेश्च । तस्मादारम्भणाधिकरणोक्तन्यायेन कृत्स्नस्य वियदादिप्रपञ्चस्य मिथ्यात्वं वज्रलेपायते ॥

---

* ब्रह्मज्ञानैकनिवर्त्यत्वादिति भावः ।

† संसारदशायां बाधाभावादिति भावः ।

‡ धर्मस्य स्वविरुद्धधर्मप्रतिक्षेपकत्वे हि स्वाश्रयसाक्षात्कारानिवर्त्यत्वं प्रयोजकं कल्प्यते संप्रतिपन्नत्वान्न तु पारमार्थिकत्वं तस्यास्माकमसंप्रतिपत्तेरित्यर्थः । टी॰

§ अरजतत्वाविरोधीति ३ । ४ पु॰ पाठः । रजतत्वाविरोधीति २ पु॰ अयुक्तः पाठः ।

|| हेतौ पञ्चमी ।

(१०) नन्वारम्भणशब्दादिभिरचेतनस्य वियदादिप्रपञ्चस्य मिथ्यात्वसिद्धावपि चेतनानामपवर्गभाजां मिथ्यात्वायोगादद्वितीयब्रह्मणि समन्वयो न युक्तः। न च तेषां ब्रह्माभेदः प्रागुक्तो युक्तः परस्परभिन्नानां तेषामेकेन ब्रह्मणा भेदासंभवात्। न च तद्भेदाऽसिद्धिः सुखदुःखादिव्यवस्थया तत्सिद्धेरिति चेद् न। तेषामभेदे ऽप्युपाधिभेदादेव * तद्व्यवस्थोपपत्तेः॥

(११) ननूपाधिभेदेपि तदभेदानपायात्कथं व्यवस्था। न ह्याश्रयभेदेनोपपादनीयो विरुद्धधर्माऽसंकरस्तदतिरिक्तस्य कस्य चिद्भेदोपगमेन सिद्ध्यति। अत्र के चिदाहुः। सिध्यत्येवान्तःकरणोपाधिभेदेन सुखदुःखादिव्यवस्था कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव विज्ञानं यज्ञं तनुतइत्यादिभिः श्रुतिभिस्तस्यैव निखिलानर्थाश्रयत्वप्रतिपादनादसङ्गो ह्ययं पुरुषः असङ्गो न हि सज्जतइत्यादिश्रुतिभिश्चेतनस्य सर्वात्मनौदासीन्यप्रतिपादनाच्च। न चैवं सति कर्तृत्वादिबन्धस्य चैतन्यसामानाधिकरण्यानुभवविरोधः अन्तःकरणस्य चेतनतादात्म्येनाध्यस्ततया तद्धर्माणां चैतन्यसामानाधिकरण्यानुभवोपपत्तेः। न चान्तःकरणस्य कर्तृत्वादिबन्धाश्रयत्वे चेतनः संसारी न स्यादिति वाच्यम्। कर्तृत्वादिबन्धाश्रयाहंकारग्रन्थि †-तादात्म्याध्यासाधिष्ठानभाव एव तस्य संसार इत्युपगमात्। तावतैव भीषणत्वाश्रयसर्पतादात्म्याध्यासाधिष्ठाने रज्ज्वादावयं भीषण इत्यभिमानवदात्मनोऽनर्थाश्रयवत्त्वाभिमानोपपत्तेः। एतदभिप्रायेणैव ध्यायतीव लेलायतीव अहंकारविमूढात्मा कर्ताहमिति मन्यतइत्यादिश्रुतिस्मृतिदर्शनाच्च। न चैकस्मिन्नेवात्मनि विचित्रसुखदुःखाश्रयतत्तदन्तःकरणानामध्यासादात्मन्याभिमानिकसुखदुःखादिव्यवस्थैवमपि न सिद्ध्यतीति ‡ वाच्यम्। आध्यासिकतादात्म्यापन्नान्तःकरणगतानर्थजातस्यैव तद्गतपरस्परभेदस्याप्यभिमानत आत्मीयतयाऽऽत्मनो यादृशमनर्थभाक्त्वं § तादृशेन || भेदेन तद्व्यवस्थोपपत्तेः। एतेन सुखदुःखादीनामन्तःकरणधर्मत्वेपि तदनुभवः साक्षिरूप इति तस्यैकत्वात्

* व्यावहारिकान्तःकरणभेदादित्यर्थः।

† अहंकारस्य चेतनेन साकं ग्रन्थितुल्यो यस्तादात्म्यरूपोऽध्यासस्तदधिष्ठानत्वमेवेत्यर्थः। टी॰

‡ सर्वान्तःकरणानामेकत्रैवाध्यासेन युगपदेव सर्वान्तःकरणगतसुखाद्यभिमानापत्तेरिति भावः।

§ कल्पितम्।

|| कल्पितेन।

सुखदुःखानुभवरूपभोगव्यवस्था न सिद्ध्यतीति निरस्तम् । तत्तदन्तःकरणतादात्म्यापत्त्या तदन्तःकरणभेदेन भेदवत एव साक्षिणस्तदन्तःकरणसुखदुःखाद्यनुभवरूपत्वेन तत्तद्व्यवस्थाया अप्युपपत्तेरिति ॥

अन्ये तु जडस्य कर्तृत्वादिबन्धाश्रयत्वानुपपत्तेः * कर्ता शास्त्रार्थवत्त्वादिति चेतनस्यैव तदाश्रयत्वप्रतिपादकसूत्रेणान्तःकरणे चिदाभासो † बन्धाश्रयस्तस्य चासत्यस्य बिम्बाद्भिन्नस्य प्रत्यन्तःकरणभेदाद्विद्वदविद्वत्सुखिदुःखिकर्त्रऽकर्त्रादिव्यवस्था । न चैवमसत्यस्य बन्धाश्रयत्वे बन्धमोक्षयोर्वैयधिकरण्यापत्तिः । अस्य चिदाभासस्यान्तःकरणावच्छिन्ने स्वरूपतः सत्यतया मुक्त्यन्वयिनि पारमार्थिकजीवे ऽध्यस्ततया कर्तृत्वाश्रयचिदाभासतादात्म्याध्यासाधिष्ठानभावस्तस्य बन्ध इत्युपगमादित्याहुः ॥

अपरे त्वात्मेन्द्रियमनो युक्तं भोक्तेत्याहुर्मनीषिण इति सहकारित्वेन देहेन्द्रियैस्तादात्म्येन मनसा च युक्तस्य चेतनस्य भोक्तृत्वश्रवणादन्तःकरणभेदेन तद्विशिष्टभेदाद्व्यवस्था । न चैवं विशिष्टस्य बन्धः शुद्धस्य मोक्ष इति वैयधिकरण्यं विशिष्टगतस्य बन्धस्य विशेष्ये अनन्वयाभावाद् विशिष्टस्यानतिरेकादित्याहुः ॥

इतरे तु अस्तु केवलश्चेतनः कर्तृत्वादिबन्धाश्रयः स्फटिकलौहित्यन्यायेनान्तःकरणस्य तद्विशिष्टस्य वा कर्तृत्वाद्याश्रयस्य संनिधाना ‡ च्चेतनेपि कर्तृत्वाद्यन्तराध्यासोपगमात् । न च तस्यैकत्वाद्व्यवस्थानुपपत्तिः । उपाधिभेदादेव तदुपपत्तेः । न चान्यभेदादन्यत्र विरुद्धधर्मव्यवस्था न युज्यते इति वाच्यम् । मूलाग्ररूपोपाधिमात्रेण वृक्षे संयोगतदभावव्यवस्थादर्शनात् । तत्तत्पुरुषकर्णपुटोपाधिभेदेन श्रोत्रभावमुपगतस्याकाशस्य तत्र तत्र शब्दोपलम्भकत्वतारतम्ये § ष्टानिष्टशब्दोपलम्भकत्वादिवैचित्र्यदर्शनाच्चेत्याहुः ॥

एके तु यद्याश्रयभेदादेव विरुद्धधर्मव्यवस्थोपपादनीया तदा चेतने निष्कृष्टे एवोपाधिवशाद्भेदकल्पनास्तु अकल्पिताश्रयभेद एव व्यवस्थाप्रयोजक इति क्वाप्यसंप्रतिपत्तेः । मणिमुकुरकृपाणाद्युपाधिकल्पितेन भेदेन मुखे श्यामा-

* उपादानगोचरापरोक्षज्ञानवत्त्वस्यैव तत्त्वेन तस्य स्वभावतो जाड्यविरोधित्वादिति भावः ।

† न तु साक्षाच्चिदात्मैव तस्य कूटस्थत्वेन बन्धपरिणामित्वायोगादिति भावः । टी०

‡ अविभागेन प्रतीतिरूपात् ।

§ शब्दोपलम्भकत्वानुपलम्भकत्वतारतम्ये ष्टानिष्टेति पाठान्तरम् ।

यदातपवर्त्तुलदीर्घभावादिधर्मणाम् अङ्गुल्यवष्टम्भोपाधिकल्पितेन भेदेन दीपे पाश्चात्यपौरस्त्यरूपभावादिधर्मणां च व्यवस्थासंप्रतिपत्तेरित्याहुः ॥

(१२) एवमुपाधिवशाद्व्यवस्थोपपादने संभाविते जीवानां परस्परसुखाद्यननुसंधानप्रयोजक उपाधिः क इति निरूपणीयम् । अथ केचिदाहुः । भोगायतना * भेदतद्भेदावनुसंधानाननुसंधानप्रयोजक उपाधिः † शरीरावच्छिन्नवेदनायास्तदवच्छिन्नेनानुसंधानाच्चरणावच्छिन्नवेदनाया हस्तावच्छिन्नेनाऽननुसंधानाच्च । हस्तावच्छिन्नोऽहं पादावच्छिन्नवेदनामनुभवामीत्यप्रत्ययात् । कथं तर्हि चरणलग्नकण्टकोद्धाराय हस्तव्यापारः । नायं हस्तव्यापारो हस्तावच्छिन्नानुसंधानात् किं त्ववयवावयविनोश्चरणशरीरयोरभेदसत्त्वेन चरणावच्छिन्नवेदना शरीरावच्छिन्नेनाहं ‡ चरणे वेदनावानित्यनुसंधीयतइति तदनुसंधानात् । एवं चैत्रमैत्रशरीरयोरभेदाभावाच्चैत्रशरीरावच्छिन्नवेदना मैत्रशरीरावच्छिन्नेन नानुसंधीयते नाप्युभयशरीरानुस्यूतावयव्यन्तरा § वच्छिन्नेनानुसंधीयते उभयानुस्यूतस्यावयविनो भोगायतनस्याभावादिति न चैत्रशरीरलग्नकण्टकोद्धाराय मैत्रशरीरव्यापारप्रसङ्ग इति ॥

अन्ये तु विश्लिष्टोपाधि || भेदो ऽननुसन्धानप्रयोजकः । तथा च हस्तावच्छिन्नस्य चरणावच्छिन्नवेदनानुसंधानाभ्युपगमेपि न दोषः । न चैवं सति गर्भस्थस्य मातृसुखानुसंधानप्रसङ्गः । एकस्मिन्नवयविन्यवयवभावेनाऽननुप्रविष्टयोर्विश्लिष्टशब्देन विवक्षितत्वात् । मातृगर्भशरीरयोस्तथात्वादित्याहुः ॥

न च उद्यदायुधदोर्दण्डाः पतितस्वशिरोक्षिभिः पश्यन्तः पातयन्ति स्म कबन्धा अप्यरीन् इहेति भारतोक्त्या विश्लेषे ऽप्यनुसंधानमवगतमिति वाच्यम् । तत्रापि शिरःकबन्धयोरेकस्मिन्नवयविन्यवयवभावेनानुप्रविष्टचरत्वात् ¶ । शिरश्छेदानन्तरं मूर्च्छामरणयोरन्यतरावश्यंभावेन दृष्टविरुद्धार्थस्य तादृशवचनस्य कैमुत्यन्यायेन योधोत्साहातिशयप्रशंसापरत्वात् । तादृक्प्रभावयुक्तपुरुषविशेषविषयत्वेन भूतार्थवादत्वेपि निरुक्त ** स्योत्सर्गतो ऽननु-

---

* शरीरम् । † उपाधी इति ३ पु॰ पाठः । ‡ जीवेन ।

§ उभयानुस्यूतो योऽवयव्यन्तरेण समष्टिरूपेणावच्छिन्नस्तेनापि चैत्रशरीरावच्छिन्नवेदना नानुसंधीयतइति संबन्धः ।

|| भोगायतनम् । टी॰

¶ पूर्वं प्रविष्टत्वादित्यर्थः । ** भोगायतनभेदस्य ।

संधानतन्त्रत्वा * विघाताच्च । अत एवो † त्तवत्त्यमाणपक्षेषु योगिनां जातिस्मराणां च शरीरान्तरवृत्तान्तानुसंधाने न दोषप्रसक्तिः ॥

अपरे तु शरीरैक्यभेदावनुसंधानतदभावप्रयोजकोपाधी बाल्यभवान्तरानुभूतयोरनुसंधानतदभावदृष्टेः । न च बाल्ययौवनयोरपि शरीरभेदः शङ्कनीयः प्रत्यभिज्ञानात् । न च परिमाणभेदात्तद्भेदावगमः । एकस्मिन् वृक्षे मूलाग्रभेदेनेव कालभेदेनैकस्मिन्ननेकपरिमाणान्वयोपपत्तेः । नन्ववयवोपचयमन्तरेण न परिमाणभेदः अवयवाश्च पश्चादापतन्तो न पूर्वसिद्धशरीरं परियुज्यन्त ‡ इति परिमाणभेदे शरीरभेद आवश्यक इति चेन्न । प्रदीपारोपणसमसमयसौधोदरव्यापिप्रभामण्डलविकासतत्पिधानसमयतत्संकोचाद्यननुरोधिनः § परमाणुप्रक्रियारम्भवादस्यानभ्युपगमात् । विवर्तवादे चैन्द्रजालिकदर्शितशरीरवद्विनैवावयवोपचयं मायया शरीरस्य वृद्ध्युपपत्तेरित्याहुः ॥

इतरे त्वन्तःकरणभेदतद्भेदाभ्यामनुसंधानाननुसंधानव्यवस्थामाहुः ॥ अयं च पक्षः प्रागुपपादितः ॥

के चित्तु अज्ञानानि जीवभेदोपाधिभूतानि नानेति स्वीकृत्य तद्भेदाभेदाभ्यामनुसंधानाननुसंधानव्यवस्थामाहुः ॥

अत्र के चित् । अंशो नानाव्यपदेशादित्यधिकरणे ‖ अदृष्टानियमात् ‖ अभिसंध्यादिष्वपि चैवं ¶ प्रदेशादिति चेन्नान्तर्भावादिति ¶ सूत्रत्रयीमनुसृत्यैकस्मिन्नात्मन्युपाधिभेदेन व्यवस्थानुपगमे कणभुगादिरीत्यात्मभेदवादेपि व्यवस्थानुपपत्तितौल्यमाहुः । तथा हि । चैत्रचरणलग्नकण्टकेन चैत्रस्य वेदनोत्पादसमये ऽन्येषामप्यात्मनां कुतो वेदना न जायते सर्वात्मनां सर्वगतत्वेन चैत्रशरीरान्तर्भावाविशेषात् । न च यस्य शरीरे कण्टकवेधादि तस्यैव वेदना नान्येषामिति व्यवस्था । सर्वात्मसंनिधावुत्पद्यमानं शरीरं कस्य चिदेव नान्येषामिति नियन्तुमशक्यत्वात् । न च यददृष्टोत्पादितं यच्छरीरं तत्तदीयमिति नियमः अदृष्टस्यापि नियमासिद्धेः । यदा हि

---

* कारणत्वाविघातादित्यर्थः ।   † नियमानभ्युपगमादित्यर्थः ।

‡ तदुपादानानि न भवितुमर्हन्तीत्यर्थः ।

§ द्व्यणुकादिक्रमेण स्थूलावयव्युत्पत्तिपक्षे विलम्बापत्तेः । टी॰

‖ ‖ व्या॰ सू॰ अ॰ २ पा॰ ३ सू॰ ४३ । व्या॰ सू॰ अ॰ २ पा॰ ३ सू॰ ५१ । व्या॰ सू॰ अ॰ २ पा॰ ३ सू॰ ५२ ।

¶ ¶ व्या॰ सू॰ अ॰ २ पा॰ ३ सू॰ ५३ ।

तददृष्टोत्पादाय केन चिदात्मना संयुज्यते मनः संयुज्यतएव तदान्यैरपि कथं कारणसाधारण्ये क्व चिदेव तददृष्टमुत्पद्येत । ननु मनःसंयोगमात्रसाधारण्येऽप्यहमिदं फलमाप्नुयामि * त्यभिसंधि † रदृष्टोत्पादककर्मानुकूलकृतिरित्येवमादि व्यवस्थितमिति तत एवादृष्टनियमो भविष्यतीति चेन्न। अभिसंध्यादीनामपि साधारणमनःसंयोगादिनिष्पाद्यतया व्यवस्थित्यसिद्धेः । ननु स्वकीयमनःसंयोगोऽभिसंध्यादिकारणमिति मनःसंयोग एवासाधारणो भविष्यतीति न । नित्यं सर्वात्मसंयुक्तं मनः कस्य चिदेव स्वमिति नियन्तुमशक्यत्वात् । न चादृष्टविशेषादात्मविशेषेण मनसः स्वस्वामिभावसिद्धिः तस्याप्यदृष्टस्य पूर्ववद्व्यवस्थित्यसिद्धेः । नन्वात्मनां विभुत्वेपि तेषां प्रदेशविशेषा एव बन्धभाज इत्यात्मान्तराणां चैत्रशरीरे तत्प्रदेशविशेषाभावात्सुखादिव्यवस्था भविष्यतीति न । यस्मिन् प्रदेशे चैत्रः सुखाद्यनुभूय तस्मात्प्रदेशादपक्रान्तस्तस्मिन्नेव मैत्रे समागते तस्यापि तत्र सुखदुःखादिदर्शनेन शरीरान्तरे आत्मान्तरप्रदेशविशेषस्याप्यन्तर्भावात् । तस्मादात्मभेदेपि ‡ व्यवस्था दुरुपपादैव । कथं चित्तदुपपादने च श्रुत्यनुरोधाल्लाघवाच्चैकात्म्यमङ्गीकृत्य तत्रैव तदुपपादनं कर्तुं युक्तमिति ॥

(१४) सन्तु तर्ह्यणव एवात्मानो यदि विभुत्वे व्यवस्था न सुवचा । मैवम् । आत्मनामणुत्वे कदा चित् सर्वाङ्गीणसुखोदयस्य करशिरश्चरणाधिष्ठानस्य चानुपपत्तेः । यदत्रार्वाचीनकल्पन § मुत्क्रान्तिगत्यागतिश्रवणान्यथानुपपत्त्या अणुर्ह्येवैष आत्मा यं वा एते सिनीतः ‖ पुण्यं च पापं च बालाग्रशतभागस्येत्यादिश्रुतिषु साक्षादणुत्वश्रवणेन चाणव एव जीवाः । तेषामणुत्वेपि ज्ञानसुखादीनां प्रदीपप्रभान्यायेनाश्रयातिरिक्तप्रदेशविशेषव्यापिगुणतया सर्वाङ्गीणसुखाद्युपलम्भः । द्रोणं बृहस्पतेर्भागमित्यादिस्मृत्यनुरोधेन जीवानामंशसत्त्वात् । करशिरश्चरणाद्यनुगलेषु सुखदुःखादियोगपद्यं कायव्यूहगतेषु योगिनां भोगवैचित्र्यं चेति न का चिदनुपपत्तिः । एवं जीवानामणुत्वेनासंकरात् सुखदुःखादिव्यवस्था विभोरीश्वराद्भेदश्चेति । अत्रोक्तमद्वैतदीपिकायाम् । एवमपि

---

* फलं प्राप्तवानिति २ पु॰ पाठः ।  † अभिसंधिः फलेच्छा । टी॰

‡ आत्मनां व्यापकत्वाभ्युपगमादित्यर्थः । टी॰

§ कल्पनाप्रकारस्तेषामणुत्वेपीत्यादिना भविष्यति । आदौ तस्याणुत्वे मानमाह उत्क्रान्तीति । टी॰

‖ सिनीतः बध्नीतः । टी॰

कथं व्यवस्थासिद्धिः चैत्रस्य पादे वेदना शिरसि सुखमिति स्वांशभेदगतसुखदुःखानुसंधानवन्मैत्रगतसुखदुःखानुसंधानस्यापि दुर्वारत्वात् । अविशेषो * हि चैत्रजीवात्तदंशयोर्मैत्रस्य च भेदः । कायव्यूहस्थले वियुज्यान्यत्र संसरणसमर्थानामंशानां जीवाद्भेदावश्यंभावादंशांशिनोस्त्वया भेदाभेदाभ्युपगमाच्च । न च शुद्धभेदो ऽननुसंधानप्रयोजक इति वाच्यम् । शुद्धत्वं हि भेदस्यांशांशिभावासहचरितत्वमभेदासहचरितत्वं वा स्यात् । नाद्यः अंशो ह्येष परमस्य ममैवांशो जीवलोके अंशो नानाव्यपदेशादिति † श्रुतिस्मृतिसूत्रैर्जीवस्य ब्रह्मांशत्वप्रतिपादनेन ब्रह्मजीवयोर्भोगसांकर्यप्रसङ्गात् । ननु जीवांशानां जीवं प्रतीव जीवस्य ब्रह्म प्रति नांशत्वं किं तु चन्द्रबिम्बस्य गुरुबिम्बः शतांश इतिवत्सदृशत्वे सति ततो न्यूनत्वमात्रमौपचारिकांशत्वमिति चेत् । किं तदतिरेकेण मुख्यमंशत्वं जीवांशानां जीवं प्रति यदज्ञाननुसंधानप्रयोजकशरीरे निवेश्यते । न तावत्पटं प्रति तन्तूनामिवारम्भकत्वं जीवस्यानादित्वात् । नापि महाकाशं प्रति घटाकाशादीनामिव प्रदेशत्वं टङ्कच्छिन्नपाषाणशकलादीनामिव खण्डत्वं वा । अणुत्वेन निष्प्रदेशत्वात् अच्छेद्यत्वाच्च । भिन्नाभिन्नद्रव्यत्वमंशत्वमभिमतमिति चेद् न । तथा सति जीवेश्वरयोर्जीवानां च भोगसांकर्यप्रसङ्गात् । स्वतो भिन्नानां तेषां चेतनत्वादिना ऽभेदस्यापि त्वया ऽङ्गीकारात् । समूहसमूहिनोर्भेदाभेदवादिनस्तव मते एकसमूहान्तर्गतानां परस्परमप्यभेदसत्त्वाच्च । स्वाभिन्नसमूहाभिन्नेन स्वस्याप्यभेदस्य दुर्वारत्वात् । यदि संयोगादीनां जातेश्चानेकाश्रितत्वं स्यात्तदा गुणगुण्यादेरभेदाद् घटाभिन्नसंयोगाभिन्नपटादेरपि घटाभेदः प्रसज्येत इत्यादि वदता त्वया तदभिन्नाभिन्नस्य तदभेदनियमाभ्युपगमात् । न च जीवान्तरसाधारणचेतनत्वादिधर्मैकरूप्यैकसमूहान्तर्गत्यादिप्रयुक्ताभेदविलक्षणमभेदान्तरमंशांशिनोरस्ति भेदे ऽप्यनुसंधानप्रयोजकं यदज्ञानातिप्रसङ्गाय विवक्ष्येत । तथा सति ‡ तस्यैव विशिष्य निर्वक्तव्यत्वापत्तेः । धर्मैकरूप्या § द्यप्रयुक्तत्वमंशांशिनोरभेदे

---

* अविशिष्ट इत्यर्थः । कायव्यूहेत्यादिनांशस्यांश्यपेक्षया भेदस्य व्यवस्थापयिष्यमाणत्वेन स्वांशगतमेवानुसंधीयते न मैत्रगतमित्यस्योपपादनासंभवादिति भावः ।

† व्या॰ सू॰ अ॰ २ पा॰ ३ सू॰ ४३ ।

‡ विलक्षणाभेदस्यांशांशिनोः सत्त्व इत्यर्थः । टी॰

§ धर्मेण चेतनत्वादिना यदैकरूप्यं तदप्रयुक्तत्वमंशांशिनोरभेदे किन्तु कार्यकारणभावादिप्रयुक्तत्वमित्यर्थः ।

विशेष इति चेन्न । जीवतदंशयोश्चेतनत्वादिधर्मैकरूप्यसत्त्वेनैकशरीरावच्छेदे कायव्यूहमेलने च समूहसत्त्वेन च तयोरभेदे धर्मैकरूप्यादिप्रयुक्तत्वस्यापि संभवात् * । धर्मैकरूप्यादिप्रयुक्ताभेदान्तरसत्त्वेपि जीवतदंशयोरंशांशिभावप्रयोजकाभेदो न तत्प्रयुक्त इति चेद् न । तयोरभेदद्वयाभावात् त्वन्मते ऽधिकरणैक्ये सति भेदस्याभेदस्य वा प्रतियोगिभेदेन तदाकारभेदेन वाऽनेकत्वानभ्युपगमात् । तस्मादाद्यपक्षे सुस्थो ऽतिप्रसङ्गः । एतेनैव द्वितीयपक्षोपि निरस्तः । अभेदासहचरितभेदस्याऽननुसंधानप्रयोजकत्वे उक्तरीत्या त्वन्मते जीवब्रह्मणोर्जीवानां चाभेदस्यापि सत्त्वेनातिप्रसङ्गस्य दुर्वारत्वात् । नन्वभेदप्रत्यक्षमनुसंधाने प्रयोजकमिति † तदभावे ऽननुसंधानं स्वस्य स्वाभेदः स्वांशाऽभेदश्च प्रत्यक्ष इति तद्दुःखाद्यनुसंधानम् । जीवान्तरेणाऽभेदसत्त्वेपि तस्याप्रत्यक्षत्वान्न तद्दुःखाद्यनुसंधानम् । जातिस्मरस्य प्राग्भवीयात्मना ऽप्यभेदस्य प्रत्यक्षसत्त्वात्तद्वृत्तान्तानुसंधानमन्येषां तदभावान्नेत्यादि सर्वं सङ्गच्छतइति चेत् तर्हि ऐकात्म्यवादेपि सर्वात्मत्वावरकाज्ञानावरणाच्चैत्रस्य न मैत्रात्माद्यभेदप्रत्यक्षमिति तत एव ‡ सर्वव्यवस्थोपपत्तेर्व्यर्थः श्रुतिविरुद्धात्मभेदाभ्युपगमः । न चेत्थमपि प्रपञ्चतत्त्ववादिनस्तव व्यवस्थानिर्वाहः सर्वज्ञस्येश्वरस्य वस्तुसज्जीवान्तराभेदप्रत्यक्षावश्यंभावेन जीवेषु दुःखवत्स्वहं दुःखीत्यनुभवापत्तेः । अस्मन्मते त्वीश्वरः स्वाभिन्ने जीवे संसारं प्रतिमुखे मालिन्यमिव पश्यन्नपि मिथ्यात्वनिश्चया § न्न शोचतीति नैष प्रसङ्गः । स्यादेतन्माभूदंशभेदः करशिरश्चरणादीनां कायव्यूहस्य चाधिष्ठानमात्मदीपस्यानपायिनी ज्ञानप्रभास्ति व्यापिनीति तयैव सर्वाधिष्ठानं ‖ भविष्यतीति चेद् न । ज्ञानवदात्मधर्मस्य सुखदुःखभोगस्य ज्ञानमाश्रित्योत्पत्त्यसंभवेन ¶ करचरणाद्यवयवभेदेन कायव्यूहवतः कायभेदेन च भोगवैचित्र्याभावप्रसङ्गात् । सुखदुःखभोगादि ज्ञानधर्म एव नात्मधर्म इत्युपगमे तद्वैचित्र्येण आत्मगुणस्य ज्ञानस्य भेदसिद्धावप्यात्मने भेदासिद्धा ** भोगवैचित्र्यादिना आत्मभेदप्रतिक्षेपायोगाद्रागाद्याश्रयस्यात्मने

* तथा चांशावच्छिन्नवेदनाया अंशिनाऽनुसंधानानुपपत्तिरिति भावः ।
† तन्नमिति २ । ३ पु · पाठः । ‡ आवरणप्रयोज्याभेदप्रत्यक्षाभावादेवेत्यर्थः ।
§ मिथ्यात्वेन प्रत्यक्षनिश्चयादित्यर्थः ।
‖ प्रेरक इत्यर्थः । टी· ¶ गुणे गुणानङ्गीकारादिति भावः ।
** आत्मगुणज्ञाननिष्ठस्य भोगवैचित्र्यस्य व्यधिकरणतयाऽऽत्मभेदसाधकत्वासंभवादित्यर्थः । टी·

ऽणुत्वेन प्रतिशरीरं विच्छिन्नतया तद्व्यापित्ववादइव तदभेदवादइव च न धर्मसङ्करापत्तिरिति मतहानेश्च। तस्माज्जीवस्याणुत्वोपगमेन व्यवस्थोपपादनं न युक्तम्। नापि तेन तस्येश्वराद्भेदसाधनं युक्तम्। उत्क्रान्त्यादिश्रवणात्साक्षादणुत्वश्रवणाच्चाणुर्जीव इति वदतस्तव मते तत्सृष्ट्वा तदेवानुप्राविशत् अन्तः प्रविष्टः शास्ता जनानां गुहां प्रविष्टौ परमे परार्धे इत्यादिश्रुतिषु प्रवेशादिश्रवणात् स एषोऽणिमा एष मआत्मान्तर्हृदये ऽणीयान् व्रीहेर्वा यवाद्वेति श्रुतेः साक्षादणुत्वश्रवणाच्च परो ऽप्यणुरेव सिध्यतीति कुतः परजीवयोर्विभुत्वाणुत्वाभ्यां भेदसिद्धिः। ननु आकाशवत्सर्वगतश्च नित्यः ज्यायान् दिवो ज्यायानन्तरिक्षादित्यादिश्रवणात् सर्वप्रपञ्चोपादानत्वाच्च परस्य सर्वगतत्वसिद्धेः तदणुत्वश्रुतयः उपासनार्था दुर्ग्रहत्वाभिप्राया वा उन्नेयाः प्रवेशश्रुतयश्च शरीराद्युपाधिना निर्वाह्याः। न च जीवोत्क्रान्त्यादिश्रुतयो ऽपि बुद्ध्या उपाधिना निर्वोढुं शक्या इति शङ्क्यम्। तमुत्क्रामन्तं प्राणो ऽनूत्क्रामतीति प्राणाख्यबुध्युत्क्रान्तेः प्रागेव जीवोत्क्रान्तिवचनात्। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमिति नामरूपमोक्षानन्तरमपि गतिश्रवणाच्च। तद्यथाऽनः सुसमाहितमुत्सर्जयन् यायादेवमेवायं शारीर आत्मा प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन्यातीति स्वाभाविकगत्याश्रयशकटदृष्टान्तोक्तेश्चेति चेन्नैतत्सारम्। स वा एष महानज आत्मा योऽयं विज्ञानमयः घटसंवृतमाकाशं नीयमाने घटे यथा घटो नीयेत नाकाशं तद्वज्जीवो नभोपम इत्यादिश्रुतिषु जीवस्यापि विभुत्वश्रवणात्। त्वन्मते प्रकृतेरेव जगदुपादानत्वेन ब्रह्मणो जगदुपादानत्वाभावात्। जीवस्य कायव्यूहगतसुखदुःखोपादानत्ववदणुत्वेपि जगदुपादानत्वसंभवाच्च ततस्तस्य * सर्वगतत्वासिद्धेः। तत्प्रवेशश्रुतीनां शरीरोपाधिकत्वकल्पने जीवोत्क्रान्त्यादिश्रुतीनामपि बुद्ध्युपाधिकत्वोपगमसंभवात्। पञ्चवृत्तिर्मनोवद्व्यपदिश्यत † इति सूत्रभाष्ये बुद्धिप्राणयोः कार्यभेदाद् भेदस्य प्रतिपादितत्वेन बुद्ध्युपाधिके जीवे प्रथममुत्क्रामति प्राणस्यानूत्क्रमणोपपत्तेः नामरूपमोक्षानन्तरं ब्रह्मप्राप्तिश्रवणस्य प्राप्तरि जीवे इव प्राप्ये ब्रह्मण्यपि विभुत्वविरोधित्वात्। प्राकृतनामरूपविमोक्षानन्तरमपि अप्राकृतलोकविग्रहाद्युपधानेन ब्रह्मणः प्राप्यत्ववादिमते प्राप्तृजीवस्याप्यप्रा-

* सर्वोपादानत्वादीश्वरस्येत्यर्थः। टी॰ † व्या॰ सू॰ अ॰ २ पा॰ ४ सू॰ १२।

कृतदेहेन्द्रियादिसत्त्वेन तदुपधानेन ब्रह्मप्राप्तिश्रवणाविरोधात् । स्वाभाविकगत्याश्रयशकटदृष्टान्तश्रवणमात्राज्जीवस्य स्वाभाविकगतिसिद्धौ गुहां प्रविष्टाविति स्वाभाविकप्रवेशाश्रयजीवसमभिव्याहारेण ब्रह्मणोपि स्वाभाविकप्रवेशसिद्धिसंभवात् । ब्रह्मजीवोभयान्वयिन एकस्य प्रवेशपदस्य एकरूपप्रवेशपरत्वस्य वक्तव्यत्वात्* । अस्मन्मते ब्रह्मात्मैक्यपरमहावाक्यानुरोधेनावान्तरवाक्यानां नेयत्वात्स्वरूपेण जीवस्य विभुत्वमौपाधिकरूपेण परिच्छेद इत्यादिप्रकारेण जीवब्रह्मभेदप्रापकश्रुतीनामुपपादनं भाष्यादिषु व्यक्तम् । तस्मादचेतनप्रपञ्चस्य मिथ्यात्वाच्चेतनप्रपञ्चस्य ब्रह्माभेदाच्च न वेदान्तानामद्वितीये ब्रह्मणि विद्यैकप्राप्ये समन्वयस्य कश्चिद्विरोध इति ॥

* ततः परमते ब्रह्मजीवयोर्विभुत्वाणुत्वादिव्यवस्थित्यसिद्धेर्न कुतोऽपि भेदसिद्धिं प्रत्याशेति ३ पु॰ अधिकम् ।

## इति द्वितीयः परिच्छेदः



# तृतीयः परिच्छेदः



ननु कथं विद्ययैव ब्रह्मप्राप्तिर्यावता * कर्मणामपि तत्प्राप्तिहेतुत्वं स्मर्यते तत्प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामुने इति । सत्यम् । नान्यः पन्था इतिश्रुतेर्नित्यसिद्धब्रह्मावाप्तौ कण्ठगतविस्मृतकनकमालाऽवाप्तितुल्यायां विद्यातिरिक्तस्य साधनत्वासंभवाच्च । ब्रह्मावाप्तौ परम्परया कर्मापेक्षामात्रपरा तादृशी स्मृतिः । क्व तर्हि कर्मणामुपयोगः । अत्र भामतीमतानुवर्तिन आहुः । तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति श्रुतेर्विद्यासंपादनद्वारा † ब्रह्मावाप्त्युपायभूतायां विविदिषायामुपयोगः । नन्विष्यमाणायां विद्यायामुपयोगः किं न स्यात् । न स्यात् प्रत्ययार्थस्य प्राधान्यात् । विद्यासंप्रयोगा ‡ त्प्रत्यासन्नानि विद्यासाधनानि शमदमादीनि विविदिषासंप्रयोगात्तु बाह्यतराणि यज्ञादीनीति सर्वापेक्षाधिकरणभाष्याच्च § । ननु विविदिषार्थं यज्ञाद्यनुष्ठातुर्वेदनगोचरेच्छावत्त्वे विविदिषायाः सिद्धत्वेन तदभावे वेदनोपाये विविदिषायां कामनाऽसंभवेन च विविदिषार्थं यज्ञाद्यनुष्ठानायोगाद् न यज्ञादीनां विविदिषायां विनियोगो युक्त इति चेन्न । अन्नद्वेषेण कार्श्यं प्राप्तस्य तत्परिहारायान्नविषयोत्कण्ठालक्षणायामिच्छायां सत्यामप्यु ‖ त्कटाजीर्णादिप्रयुक्तधातुवैषम्यदोषात्तत्र प्रवृत्तिपर्यन्ता रुचिर्न जायते इति तद्रोचकौषधविधिवन्निरतिशयानन्दरूपं ब्रह्म तत्प्राप्तौ विद्या साधनमित्यर्थे प्राचीनबहुजन्मानुष्ठितानभिसंहितफलनित्यनैमित्तिककर्मोपार्जितचित्तप्रसादमहिम्ना संपन्नविश्वासस्य पुरुषस्य ब्रह्मावाप्तौ विद्यायां च तदौत्कण्ठ्यलक्षणायामिच्छायां सत्यामप्यनादिभवसंचितानेकदुरितदोषेणाऽऽस्तिककामुकस्य हेयकर्मणीव विषयभोगे प्रावण्यं संपादयता प्रतिबन्धाद्विद्यासाधने श्रवणादौ प्रवृत्तिपर्यन्ता रुचिर्न जायतइति प्रतिबन्धनिरासपूर्वं तत्संपादकयज्ञादिविधानोपपत्तेरिति ॥

---

* यस्मादित्यर्थः । टी॰

† सत्त्वशुद्ध्या विविदिषोत्पादनद्वारेति भावः ।

‡ विद्यासाधनत्वादित्यर्थः । टी॰

§ ब्र॰ सू॰ अ॰ ३ पा॰ ४ सू॰ २६ ।

‖ अधिकेत्यर्थः । टी॰

विवरणानुसारिणस्त्वाहुः । प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यमिति सामान्यन्यायादिच्छाविषयतया शब्दबोध्यएव शाब्दसाधनतान्वय * इति स्वर्गकामादिवाक्ये क्लृप्तविशेषन्यायस्य बलीयस्त्वादश्वेन जिगमिषति असिना जिघांसतीत्यादिलौकिकप्रयोगे ऽश्वादिरूपसाधनस्य तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यं निदिध्यासितव्य इत्यादिवैदिकप्रयोगे तव्यार्थभूतविधेश्च सन्प्रत्ययाभिहितेच्छाविषयएव गमनादावन्वयस्य व्युत्पन्नत्वाच्च प्रकृत्यभिहितायां विद्यायां यज्ञादीनां विनियोगः । ननु तथा सति यावद्विद्योदयं कर्मानुष्ठानापत्तेस्त्यजतैव हि तज् ज्ञेयमित्यादिश्रुतिसिद्धं कर्मत्यागरूपस्य संन्यासस्य विद्यार्थत्वं पीड्येतेति चेन्न । प्राग्बीजाऽऽवापात्कर्षणं तदनन्तरमकर्षणमिति कर्षणाकर्षणाभ्यां व्रीह्यादिनिष्पत्तिवदारुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते योगारूढस्य तस्यैव शमः कारणमुच्यत † इत्यादिवचनानुसारेण चेतसः शुद्धौ विविदिषादिरूपप्रत्यक्प्रावण्योदयपर्यन्तं कर्मानुष्ठानं ततः संन्यास इति कर्मतत्संन्यासाभ्यां विद्यानिष्पत्त्युपगमात् । उक्तं हि नैष्कर्म्यसिद्धौ प्रत्यक्प्रवणतां बुद्धेः कर्माण्यापाद्य शुद्धितः कृतार्थान्यस्तमायान्ति प्रावृडन्ते घनाइवेति । कर्मणां विद्यार्थत्वपक्षेपि विविदिषापर्यन्तमेव कर्मानुष्ठाने विविदिषार्थत्वपक्षात्को भेद इति चेद् अयं भेदः । कर्मणां विद्यार्थत्वपक्षे द्वारभूतविविदिषासिद्ध्यनन्तरमुपरतावपि ‡ फलपर्यन्तानि विशिष्टगुरुलाभान्निर्विघ्नश्रवणमनननिदिध्यासनसाधनानि निवृत्तिप्रमुखानि संपाद्य विद्योत्पादकत्वनियमोस्ति । विविदिषार्थत्वपक्षे तु श्रवणादिप्रवृत्तिजननसमर्थोत्कटेच्छासंपादनमात्रेण कृतार्थतेति नावश्यं विद्योत्पादकत्वनियमः । यस्यैते ऽष्टाचत्वारिंशत्संस्कारा इति स्मृतिमूले कर्मणामात्मज्ञानयोग्यतापादकमलापकर्षणगुणाधानलक्षणसंस्कारार्थत्वपक्षइवेति वदन्ति ॥

(२) ननु केषां कर्मणामयमुदाहृतश्रुत्या विनियोगो बोध्यते । अत्र केचिदुक्तं वेदानुवचनेनेति ब्रह्मचारिधर्माणां यज्ञेन दानेनेति गृहस्थधर्माणां § तपसाऽनाशकेनेति वानप्रस्थधर्माणां § चोपलक्षणमित्याश्रमधर्माणामेव विनियोग-

* इच्छाविषयत्वस्य फलत्वव्यञ्जकत्वात्पुरुषार्थत्वेन प्रतीतस्य स्वर्गस्यैव फलत्वं न कामनाया इत्यर्थः । टी॰

† कर्तव्यमित्यर्थः ।

‡ त्यागेपीत्यर्थः । टी॰ §§ एतन्मध्यस्थं २ पु॰ नास्ति ।

योगः। अत एव विहितत्वाच्चाश्रमकर्मापीति * शारीरकसूत्रे विद्यार्थकर्मस्वाश्रमकर्मपदप्रयोग इति ॥

कल्पतरौ तु नाश्रमधर्माणामेव विद्योपयोगः । अन्तरा चापि तु तद्दृष्टेरित्यधिकरणे † आश्रमरहितविधुराद्यनुष्ठितकर्मणामपि विद्योपयोगनिरूपणात्। न च विधुरादीनामनाश्रमिणां ‡ प्राग्जन्माद्यनुष्ठितयज्ञाद्युत्पादितविविदिषाणां ‡ विद्यासाधनश्रवणादावधिकारनिरूपणमात्रपरं तदधिकरणं न तु तदनुष्ठितकर्मणां विद्योपयोगनिरूपणपरमिति शङ्क्यम् । विशेषानुग्रहश्चेति § तदधिकरणसूत्रतद्भाष्ययोः तदनुष्ठितानां जपादिरूपवर्णमात्रधर्माणामपि विद्योपयोगस्य कण्ठोक्तेर्विहितत्वाच्चाश्रमकर्मापीतिसूत्रे आश्रमपदस्य वर्णधर्माणामप्युपलक्षणत्वादित्यभिसंधायोक्त || माश्रमधर्मातिरिक्तानामप्यस्ति विद्योपयोगः । किं तु नित्यानामेव तेषां हि फलं दुरितक्षयं विद्याऽपेक्षते न काम्यानां फलं स्वर्गादि । तत्र यथा प्रकृतौ क्लृप्तोपकाराणामङ्गानामतिदेशे सति न प्राकृतोपकारातिरिक्तोपकारकल्पनमेवं ज्ञाने विनियुक्तानां यज्ञादीनां क्लृप्तनित्यफलपापक्षयातिरेकेण न नित्यकाम्यसाधारणविद्योपयोग्युपकारकल्पनमिति ॥

संक्षेपशारीरके तु नित्यानां काम्यानां च कर्मणां विनियोग उक्तः यज्ञादिशब्दाऽविशेषात् । प्रकृतौ ¶ क्लृप्तोपकाराणां पदार्थानां क्लृप्तप्राकृतोपकारातिदेशमुखेनैव विकृतिष्वतिदेशेन संबन्धो न तु पदार्थानामतिदेशानन्तरमुपकारकल्पनेति न तत्र प्राकृतोपकारातिरिक्तोपकारकल्पनाप्रसक्तिः । इह तु प्रत्यक्षश्रुत्या प्रथममेव विनियुक्तानां यज्ञादीनामुपदिष्टानामिव पश्चात्कल्पनीय उपकारः प्रथमावगतविनियोगनिर्वाहायाक्लृप्तो ऽपि सामान्यशब्दोपात्तसकलनित्यकाम्यसाधारणः कथं न कल्प्यः । अध्वरेष्वध्वरमीमांसकैरपि ह्युपकारमुखेन पदार्थान्वयएव क्लृप्तोपकारनियमः ** पदार्थान्वयानन्तरमुपकारकल्पने त्वक्लृप्तोपि विनियुक्तपदार्थानुगुण एवोपकारः कल्पनीय इति

* व्या॰ सू॰ अ॰ ३ पा॰ ४ सू॰ ३२। † व्या॰ सू॰ अ॰ ३ पा॰ ४ सू॰ ३६।

‡ ‡ एतन्मध्यस्थं २ पु॰ नास्ति। § व्या॰ सू॰ अ॰ ३ पा॰ ४ सू॰ ३०।

|| कल्पतरावित्यनेनान्वेति।

¶ प्रकृते यज्ञादीनां विनियोगानन्तरमुपकारकल्पनमतिदेशस्थले तु प्रकृतावुपकारकल्पनानन्तरं प्राकृतपदार्थानां विकृतिषु विनियोगस्ततो दृष्टान्तो विषम इति। टी॰

** क्लृप्तोपकारातिरिक्तोपकाराकल्पनमित्यर्थः। टी॰

संप्रतिपद्यैव आद्यलक्षणारम्भसिद्ध्यर्थमुपकारमुखो विकृतिषु प्राकृतान्वयो दश-माद्ये समर्थितः । किं च क्लृप्तोपकारालाभा* न्नित्यानामेवायं विनियोग इत्य-भ्युपगमे नित्येभ्यो दुरितक्षयस्य तस्माज् ज्ञानोत्पत्तेरन्यतः सिद्धौ व्यर्थोयं विनियोगः । अन्यतस्तदसिद्धौ† ज्ञानापेक्षितोपकारजनकत्वं नित्येषु न क्लृप्तमि-त्यविशेषान्नित्यकाम्यसाधारणविनियोगो दुर्वारः । ननु नित्यानां दुरितक्षयमा-त्रहेतुत्वस्यान्यतः सिद्धावपि विशिष्य ज्ञानोत्पत्तिप्रतिबन्धकदुरितनिबर्हकत्वं न सिद्धं किं तु अस्मिन् विनियोगे सति ज्ञानोद्देशेन नित्यान्यनुतिष्ठतो ऽवश्यं ज्ञानं भवति इतरथा‡ शुद्धिमात्रमनियता ज्ञानोत्पत्तिरिति सार्थकोयं विनि-योग इति चेत् तर्हि नित्यानामप्यक्लृप्तमेव नियमतो ज्ञानोत्पत्तिप्रतिबन्धक-दुरितनिबर्हणत्वं ज्ञानसाधनविशिष्टगुरुलाभश्रवणमननादिसंपादकापूर्वं च द्वारं कल्पनीयमित्यक्लृप्तोपकारकल्पनाविशेषान्न सामान्यश्रुत्यापादितो नित्यकाम्य-साधारणविनियोगो भञ्जनीय इति ॥

(३) नन्वेवमपि कथं कर्मणैव हि संसिद्धिमास्थिता जनकादय इत्यादि-स्मरणनिर्वाहः । न च तस्य विद्यार्थकर्मानुष्ठानपरत्वम् विविदिषावाक्ये§ ब्राह्मणानामेव विद्यार्थकर्मण्यधिकारप्रतीतेः । अतो जनकाद्यनुष्ठितकर्मणां साक्षादेव मुक्त्युपयोगो वक्तव्यः । मैवम् । विविदिषावाक्ये ब्राह्मणग्रहणस्य त्रैवर्णिकोपलक्षणत्वात् । यथाहुरत्रभवन्तो वार्त्तिककाराः । ब्राह्मणग्रहणं चात्र द्विजानामुपलक्षणम् । अविशिष्टाधिकारित्वात्सर्वेषामात्मबोधने इति । न हि विद्याकामो यज्ञादीननुतिष्ठेदिति विपरिणमिते विद्याकामाधिकारविधौ ब्राह्म-णपदस्याधिकारिविशेषसमर्पकत्वं युज्यते उद्देश्ये विशेषणायोगात्|| । नापि राजा स्वाराज्यकामो राजसूयेन यजेतेति स्वाराज्यकामाधिकारे राजसूयविधौ स्वाराज्यकामो राजकर्तृकेण राजसूयेन यजेतेति कर्तृतया यागविशेषणत्वेन विधेयस्य राज्ञो राजकर्तृकराजसूयस्याराज्ञा संपादयितुमशक्यत्वादर्थादधि-कारिकोटिनिवेशवदिह यज्ञादिकर्तृतया विधेयस्य ब्राह्मणस्यार्थादधिकारिको-

* काम्येष्विति शेषः । टी॰ क्लृप्तोपकारलोभादिति २ पु॰ पाठः ।

† नित्यानां विद्योपकारकत्वासिद्धावित्यर्थः । टी॰

‡ एतद्विनियोगाभावे इत्यर्थः । टी॰ § ब्राह्मणग्रहणेनेति २ पु॰ अधिकः पाठः ।

|| विधेययज्ञादिनिरूपितोद्देश्यतया विद्याकाममात्रे पर्यवसानसंभवेन ब्राह्मणरूपविशेष-णस्यानाकाङ्क्षिततया विद्याकामं प्रति विशेषणत्वेनान्वयायोगाद् विशिष्टस्योद्देश्यत्वकल्पने गौरवाच्च । टी॰

टनिवेश इति युज्यते । सर्वथापि तएवोभयलिङ्गा * दितिसूत्रे ऽन्यत्र विहितानामेव यज्ञादीनां विविदिषावाक्ये फलविशेषसंबन्धविधिनाऽपूर्वयज्ञादिविधिरिति व्यवस्थापितत्वेन प्राप्तयज्ञाद्यनुवादेनैकस्मिन्वाक्ये कर्तृरूपगुणविधिः फलसंबन्धविधिश्चेत्युभयविधानाद् वाक्यभेदापत्तेः । नापि राजसूयवाक्ये राज्ञः कर्तृतया विधेयत्वाभावपक्षे राजपदसमभिव्याहारमात्राद्विशिष्टकर्तृत्वलाभवदिह वाक्याभेदाय कर्तृतया ब्राह्मणाऽविधानेपि ब्राह्मणपदसमभिव्याहारमात्रेण ब्राह्मणकर्तृत्वलाभात् तदधिकारपर्यवसानमित्युपपद्यते अन्यत्र त्रैवर्णिकाधिकारिकत्वेन क्लृप्तानामिहापि त्रैवर्णिकाधिकारात्मविद्यार्थत्वेन † विधीयमानानां यज्ञादीनां त्रैवर्णिकाधिकारित्वस्य युक्ततया विधिसंसर्गहीनब्राह्मणपदसमभिव्याहारमात्रादधिकारसङ्कोचाऽसंभवेन ब्राह्मणपदस्य यथाप्राप्तविद्याधिकारिमात्रोपलक्षणौचित्यात् ॥

ननु विद्याधिकारिमात्रोपलक्षणत्वे शूद्रस्यापि विद्यायामर्थित्वादिसंभवेन तस्यापि विद्यार्थकर्माधिकारप्रसङ्ग इति चेन्न । अध्ययनगृहीतस्वाध्यायजन्यतदर्थज्ञानवत एव वैदिकेष्वधिकार इत्यपशूद्राधिकरणे ‡ अध्ययनवेदवाक्यश्रवणादिविधुरस्य शूद्रस्य विद्याधिकारनिषेधाद् न शूद्राय मतिं दद्यादिति स्मृतेरापाततोपि तस्य विद्यामहिम्नाऽवगत्युपायाऽसंभवेन तदर्थित्वानुपपत्तेश्च तस्य विद्यायामनधिकारादिति केचित् ॥

अन्ये त्वाहुः । शूद्रस्याप्यस्त्येव विद्यार्थकर्माधिकारः । तस्य वेदानुवचनाऽग्निहोत्राद्यसंभवेपि कण्ठोक्तसर्ववर्णाधिकारश्रीपञ्चाक्षरमन्त्रराजविद्यादिजपपापक्षयहेतुतपोदानपाकयज्ञादिसंभवाद् वेदानुवचनेन यज्ञेन दानेनेत्यादिपृथक्करणविभक्तिश्रुतेर्विधुरादीनां विद्यार्थं जपदानादिमात्रानुष्ठानानुमतेश्च वेदानुवचनादिसमुच्चयाऽनपेक्षणात् । न च शूद्रस्य विद्यायामर्थित्वासंभवः श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः इत्यादीतिहासपुराणश्रवणे चातुर्वर्ण्याधिकारस्मरणेन पुराणाद्यवगतविद्यामाहात्म्यस्य तस्यापि विद्यार्थित्वसंभवात् । न शूद्राय मतिं दद्यादिति स्मृतेश्च तदनुष्ठानानुपयोग्यग्निहोत्रादि-

---

* व्या॰ सू॰ अ॰ ३ पा॰ ४ सू॰ ३४ ।

† ब्राह्मणस्येव क्षत्रियवैश्ययोरपि विद्यायामर्थित्वलक्षणाधिकाराविशेषात् शूद्रस्येव विद्यार्थयज्ञादिषु तयोः प्रतिषेधाभावाच्चेत्यर्थः । टी॰

‡ व्या॰ सू॰ अ॰ १ पा॰ ३ सू॰ ३४ ।

ह्मोपासनस्यार्थतथात्वविवेचकनिर्विचिकित्समूलप्रमाणनिरपेक्षस्य दहराद्युपासनावदुपासनाशास्त्रमात्रमवलम्ब्य क्रियमाणस्यापि वस्तुतो यथार्थत्वेन दहराद्युपासनेनेव निर्गुणोपासनेन जन्यस्य स्वविषयसाक्षात्कारस्य श्रवणादिप्रणाड्या जन्यसाक्षात्कारवदेव तत्त्वार्थविषयत्वावश्यंभावाच्च । इयांस्तु विशेषः प्रतिबन्धरहितस्य पुंसः श्रवणादिप्रणाड्या ब्रह्मसाक्षात्कारो झटिति सिद्ध्यतीति सांख्यमार्गो मुख्यः कल्पः उपास्त्या तु विलम्बेनेति योगमार्गो ऽनुकल्प इति ॥

(९) नन्वस्मिन्पक्षद्वयेपि ब्रह्मसाक्षात्कारे किं करणम् । के चिदाहुः । प्रत्ययाभ्यासरूपं * प्रसंख्यानमेव । योगमार्गे आदित आरभ्योपासनारूपस्य सांख्यमार्गे मननानन्तरनिदिध्यासनरूपस्य च तस्य सत्त्वात् । न च तस्य ब्रह्मसाक्षात्कारकारणत्वे मानाभावः ततस्तु तं पश्यति निष्कलं ध्यायमान इति श्रवणात् । कामाऽऽतुरव्यवहितकामिनीसाक्षात्कारे प्रसंख्यानस्य कारणत्वक्लृप्तेश्च । आप्रायणात्तत्रापि हि दृष्टमित्यधिकरणे † विकल्पो ऽविशिष्टफलत्वादित्यधिकरणे ‡ च दहराद्यहंग्रहोपासकानां प्रसंख्यानादुपास्यसगुणब्रह्मसाक्षात्काराङ्गीकाराच्च । ननु च प्रसंख्यानस्य प्रमाकरणेष्वपरिगणनात्तज्जन्यो ब्रह्मसाक्षात्कारः प्रमा न स्यात् । न च काकतालीयसंवादिवराटकसंख्याविशेषाऽऽहार्यज्ञानवदर्थाऽबाधेन प्रमाणत्वोपपत्तिः । प्रमाणाऽमूलकस्य प्रमात्वायोगात् । आहार्यवृत्तेश्चोपासनावृत्तिवज् ज्ञानभिन्नमानसक्रियारूपतयेच्छादिवदबाधितार्थविषयत्वेपि § प्रमात्वाऽनभ्युपगमात् । मैवम् । क्लृप्तप्रमाकरणामूलकत्वेपि ईश्वरमायावृत्तिवत्प्रमात्वोपपत्तेः । विषयाबाधतौल्यात् । मार्गद्वयेपि प्रसंख्यानस्य विचारितादविचारिताद्वा वेदान्ताद्ब्रह्मात्मैक्यावगममूलकतया प्रसंख्यानजन्यस्यापि ब्रह्मसाक्षात्कारस्य प्रमाणमूलकत्वाच्च । उक्तं हि कल्पतरुकारैः । वेदान्तवाक्यजज्ञानभावनाजा ऽपरोक्षधीः मूलप्रमाणदार्ढ्येन ‖ न भ्रमत्वं प्रपद्यते । न च प्रामाण्यपरस्त्वापत्तिः अपवादनिरासाय मूलशुद्ध्यनुरोधादिति ॥

---

* प्रत्ययाभिख्यानरूपमिति २ पु॰ पाठः । † व्या॰ सू॰ अ॰ ४ पा॰ १ सू॰ १२ ।

‡ व्या॰ सू॰ अ॰ ३ पा॰ ३ सू॰ ५९ ।

§ अबाधितार्थज्ञानत्वं हि प्रमात्वं न त्वबाधितार्थत्वमात्रमतिप्रसङ्गादिति भावः । टी॰

‖ मूलप्रमाणं वेदान्तवाक्यं तज्जन्यप्रमा वा तस्य दार्ढ्यमविप्रतिपन्नकारणकत्वमिति बोध्यम् । टी॰

अन्ये तु एषो ऽणुरात्मा चेतसा वेदितव्यः दृश्यते * त्वग्र्यया बुद्ध्येत्यादिश्रुतेर्मन एव ब्रह्मसाक्षात्कारे करणं तस्य सोपाधिकात्मन्यहंवृत्तिरूपप्रमाकरणत्वक्लृप्तेः । स्वप्रपञ्चविपरीतप्रमात्वादिज्ञानसाधनस्यान्तःकरणस्येत्यादिपञ्चपादिकाविवरणग्रन्थेनापि तथा प्रतिपादनात् । अहमेवेदं सर्वं सर्वो ऽस्मीति मन्यते सो ऽस्य परमो लोक इतिश्रुत्युक्ते स्वाप्ने ब्रह्मसाक्षात्कारे एव मनसः करणत्वसंप्रतिपत्तेश्च तदा करणान्तराऽभावात् । प्रसंख्यानं तु मनःसहकारिभावेनोपयुज्यते । वाक्यार्थभावनापरिपाकसहितमन्तःकरणं त्वंपदार्थस्यापरोक्षस्य तत्तदुपाध्याकारनिषेधेन तत्पदार्थतामाविर्भावयतीति भामतीवचनात् । ज्ञानप्रसादेन † विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमान इतिश्रुतावपि ज्ञानप्रसादशब्दितचित्तैकाग्र्यहेतुतयैव ध्यानोपादानात् । न तु प्रसंख्यानं स्वयं करणं तस्य क्व चिदपि ज्ञानकरणत्वाऽक्लृप्तेः । कामातुरकामिनीसाक्षात्कारादावपि प्रसंख्यानसहकृतस्य मनस एव करणत्वोपपत्त्या ऽक्लृप्तज्ञानकरणान्तरकल्पनाऽयोगादित्याहुः ॥

अपरे तु तद्धास्य विजज्ञौ तमसः पारं दर्शयति आचार्यवान् पुरुषो वेद तस्य तावदेव चिरमित्यादिश्रुतिषु आचार्योपदेशानन्तरमेव ब्रह्मसाक्षात्कारोदये जीवन्मुक्तिश्रवणाद्वेदान्तविज्ञानसुनिश्चितार्था इति ज्ञानान्तरनैराकाङ्क्ष्यश्रवणात्तं त्वौपनिषदं पुरुषमिति ब्रह्मण उपनिषदेकगम्यत्वश्रवणाच्चौपनिषदं महावाक्यमेव ब्रह्मसाक्षात्कारे करणं न मनः । यन्मनसा न मनुतइति तस्य ब्रह्मज्ञानकरणत्वनिषेधात् । न चाऽपक्वमनोविषयमिदं येनाहुर्मनो मतमिति वाक्यशेषे मनोमात्रग्रहणात् ‡ । न चैवं यद्वाचा ऽनभ्युदितमिति शब्दस्यापि तत्करणत्वं निषिध्यतइति शङ्क्यम् । मनःकरणत्ववादिनामपि शब्दस्य निर्विशेषपरोक्षज्ञानकरणत्वस्याभ्युपगतत्वेन तस्य यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेतिश्रुत्यनुरोधेन शब्दार्थप्राप्ति § रूपशक्तिमुखेन शब्दस्य तत्करणत्वनिषेधे तात्पर्यस्य वक्तव्यतया शक्यसंबन्धरूपलक्षणामुखेन तस्य

---

* गम्यते इति २ पु॰ पाठः ।

† करणव्युत्पत्त्या ज्ञानपदं चित्तपरं तस्य प्रसाद ऐकाग्र्यम् । टी॰

‡ येन चैतन्येन मतं प्रकाशितं मन इति वाक्यशेषे ऽपक्वमन एव चैतन्यभास्यमिति वक्तुमशक्यतया तत्र मनोमात्रग्रहणमावश्यकं तदैकरूप्याय न मनुतइति पूर्ववाक्येऽपि मनोमात्रं ग्राह्यमित्यर्थः । टी॰ § प्राप्तिः संबन्धः ।

तत्करणत्वाविरोधात् । न च मनसैवाऽनुद्रष्टव्यमिति श्रुतिसिद्धं मनसोपि तत्र करणत्वं न पराकर्तुं शक्यमिति वाच्यम् । शाब्दसाक्षात्कारजननेपि तदैकाग्र्यस्याऽपेक्षितत्वेन हेतुत्वमात्रेण तृतीयोपपत्तेः । मनसा ह्येव पश्यति मनसा शृणोतीत्यादौ तथा दर्शनात् । गीताविवरणे भाष्यकारीयमनःकरणत्ववचनस्य मतान्तराभिप्रायेण प्रवृत्तेरित्याहुः ॥

(१०) ननु तथापि शब्दस्य परोक्षज्ञानजनकत्वस्वभावस्य नापरोक्षज्ञानजनकत्वं संगच्छतइति चेद् अत्र के चित् । स्वतो ऽसमर्थोपि शब्दः शास्त्रीयश्रवणमननपूर्वकप्रत्ययाभ्यासजनितसंस्कारप्रचयलब्धब्रह्मैकाग्र्य * चित्तदर्पणाऽनुगृहीतो ऽपरोक्षज्ञानमुत्पादयति । शास्त्रीयसंस्कारसंस्कृताऽग्न्यधिकरण इव होमो ऽपूर्वमिति कल्प्यते । तरति शोकमात्मविदिति शास्त्रप्रामाण्यात् । अपरोक्षस्य कर्तृत्वाद्यध्यासस्यापरोक्षाधिष्ठानज्ञानं विना निवृत्त्ययोगात् । औपनिषदे ब्रह्मणि मानान्तराऽप्रवृत्तेः शब्दादपरोक्षज्ञानानुत्पत्तौ अनिर्मोक्षप्रसङ्गादित्याहुः ॥

अन्ये तु भावनाप्रचयसाहित्ये सति बहिरसमर्थस्यापि मनसो नष्टवनितासाक्षात्कारजनकत्वदर्शनान्निदिध्यासनसाहित्येन शब्दस्याप्यपरोक्षज्ञानजनकत्वं युक्तमिति दृष्टान्तानुरोधेन समर्थयन्ते ॥

अपरे त्वपरोक्षार्थविषयत्वं ज्ञानस्यापरोक्ष्यं नामाऽन्याऽनिरुक्तेः † । अर्थापरोक्षत्वं तु नापरोक्षज्ञानविषयत्वं येनान्योन्याश्रयो भवेत् किं तु तत्तत्पुरुषचैतन्याऽभेदः । अन्तःकरणतद्धर्माणां साक्षिणि कल्पिततया तदभेदसत्त्वात् । बाह्यचैतन्ये कल्पितानां घटादीनां बाह्यचैतन्ये वृत्तिकृततत्तत्पुरुषीयचैतन्याऽभेदाभिव्यक्त्या तदभेदसत्त्वाच्च न क्वाप्यव्याप्तिः । न चान्तःकरणधर्माणां ज्ञानादीनामिव धर्माधर्मसंस्काराणामपि साक्षिणि कल्पितत्वाविशेषादापरोक्ष्यापत्तिः तेषामनुद्भूतत्वात् । उद्भूतस्यैव ‡ जडस्य चैतन्याऽभेद आपरोक्ष्यमित्यभ्युपगमात् । एवं च सर्वदा सर्वपुरुषचैतन्याभिन्नत्वाद्यत्साक्षादपरोक्षाद्ब्रह्मेतिश्रुत्या स्वत एवापरोक्षं ब्रह्मेत्यपरोक्षार्थविषयत्वाच्छाब्दस्यापि ब्रह्मज्ञानस्यापरोक्षत्ववाचोयुक्तिर्युक्तैवेत्याहुः ॥

---

* संस्कारप्रचयेन संस्कारबाहुल्येन लब्धं ब्रह्मण्येकाग्र्यं येनेत्यर्थः ।

† इन्द्रियजन्यत्वादेश्च प्रथमपरिच्छेदावसाने निरस्तत्वादिति भावः । टी॰

‡ उद्भूतत्वं च फलबलकल्प्यः स्वभावविशेषः । टी॰

अद्वैतविद्याचार्यास्तु नापरोक्षार्थविषयत्वं ज्ञानस्यापरोक्ष्यं स्वरूपसुखापरोक्षरूपज्ञानाव्यापनात् स्वविषयत्वलक्षणस्वप्रकाशत्वनिषेधात् *। किं तु यथा तत्तदर्थस्य स्वव्यवहारानुकूलचैतन्याऽभेदोऽर्थापरोक्ष्यम् एवं तद्व्यवहारानुकूलचैतन्यस्य तत्तदर्थाभेदो ज्ञानापरोक्ष्यं तथा च चैतन्यधर्म एवेदमापरोक्ष्यं न त्वनुमितित्वेच्छात्वादिवदन्तःकरणवृत्तिधर्मः। अत एव सुखादिप्रकाशरूपे साक्षिणि स्वरूपसुखप्रकाशरूपे चैतन्ये चापरोक्ष्यम्। न च घटाद्यैन्द्रियकवृत्तौ तदनुभवविरोधः। अनुभवस्य वृत्त्यवच्छिन्नचैतन्य† गताऽपरोक्ष्यविषयत्वोपपत्तेः। ननु उक्तं ज्ञानार्थयोरापरोक्ष्यं हृदयादिगोचरशाब्दवृत्तितद्विषययोरतिप्रसक्तम्। तत्र दैवात्कदा चिद्वृत्तिविषयसंसर्गे सति वृत्त्यवच्छिन्नचैतन्यस्य विषयाऽभिन्नचैतन्यस्य चाऽभेदाभिव्यक्तेरवर्जनीयत्वादिति चेद् न। परोक्षवृत्तेर्विषयावच्छिन्नचैतन्यगताऽज्ञाननिवर्तनाक्षमतया तत्राऽज्ञानेनावृतस्य विषयचैतन्यस्यानावृतेन वृत्त्यवच्छिन्नसाक्षिचैतन्येनाभेदाभिव्यक्तेरभावादापरोक्ष्याऽप्रसक्तेः। अत एव ‡ जीवस्य संसारदशायां वस्तुतः सत्यपि ब्रह्माभेदे न तदापरोक्ष्यम्। अज्ञानावरणकृतभेदसत्त्वात्। न चैवं ब्रह्मणोऽपि जीवाऽपरोक्ष्यासंभवादसर्वज्ञत्वापत्तिः अज्ञानस्येश्वरं प्रत्यनावरकतया तं प्रति जीवभेदाऽनापादनात्। यदज्ञानं यं प्रत्यावरकं तस्य तं प्रत्येव स्वाश्रयभेदापादकत्वात्। अत एव § चैत्रज्ञानेन तस्य घटाज्ञाने निवृत्तेऽनिवृत्तं मैत्राज्ञानं मैत्रं प्रत्येव विषयचैतन्यस्य भेदापादकमिति न चैत्रस्य घटापरोक्ष्याऽनुपपत्तिरिति। नन्वेवं वृत्तिविषयचैतन्याभेदाभिव्यक्तिलक्षणस्यापरोक्षत्वस्य स्वविषयचैतन्यगताज्ञाननिवृत्तिप्रयोज्यत्वे तस्य अज्ञाननिवृत्तिप्रयोजकत्वायोगाज् ज्ञानमात्रमज्ञाननिवर्तकं भवेदिति चेद् न। यज् ज्ञानमुत्पद्यमानं स्वकारणमहिम्ना विषयसंसृष्टमेवोत्पद्यते तदेवाज्ञाननिवर्तकमिति विशेषणाद् ऐन्द्रियकज्ञानानां

---

* एकस्मिन् चैतन्ये विषयविषयिभावलक्षणसंबन्धो न संभवति संबन्धस्य द्विनिष्ठत्वात्। स्वविषयत्वं विनापि स्वसत्ताप्रयुक्तसंशयागोचरत्वादिलक्षणस्य स्वप्रकाशत्वस्याकरेषु निरूपितत्वादिति भावः। टी॰

† वृत्तिचैतन्ययोस्तादात्म्येन वृत्तिसाक्षात्कारस्वरूपानुभवस्य चैतन्यगतापरोक्ष्यविषयकत्वोपपत्तेरित्यर्थः। टी॰

‡ अभेदाभिव्यक्तेरेवापरोक्षत्वप्रयोजकत्वस्वीकारादेवेत्यर्थः। टी॰

§ यं प्रति यदज्ञानमित्यादिव्यवस्थाऽभ्युपगमादेव चैत्रस्य घटापरोक्ष्यानुभवानुपपत्तिरपि नेति संबन्धः। टी॰

तथात्वात् । एवं च शब्दादुत्पद्यमानमपि ब्रह्मज्ञानं सर्वोपादानभूतस्वविषयब्रह्मचैतन्यसंसृष्टमेवोत्पद्यतइति तस्याज्ञाननिवर्तकत्वमज्ञाननिवृत्तौ तन्मूलभेदप्रविलयादापरोक्ष्यं चेत्युपपद्यतेतराम् । नन्वेवमध्ययनगृहीतवेदान्तजन्येनापि तज्ज्ञानेन मूलाज्ञाननिवृत्त्या आपरोक्ष्यं किं न स्यात् । न च* तत्सत्तानिश्चयरूपत्वाभावान्नाज्ञाननिवर्तकमिति वाच्यम् । तथापि कृतश्रवणस्य निर्विचिकित्सशाब्दज्ञानेन तन्निवृत्त्या मननादिवैयर्थ्यापत्तिरिति चेन्न । सत्यपि श्रवणान्निर्विचिकित्सज्ञाने चित्तविक्षेपदोषेण प्रतिबन्धाद् अज्ञानानिवृत्त्या तन्निराकरणे मनननिदिध्यासननियमविध्यर्थानुष्ठानस्यार्थवत्त्वाद् भवान्तरीयमननाद्यनुष्ठाननिरस्तचित्तविक्षेपस्योपदेशमात्राद् ब्रह्मापरोक्षस्येष्टमाणत्वाच्चेत्याहुः ॥

(११) अथैवमपि कृतनिदिध्यासनस्य वेदान्तजन्यब्रह्मज्ञानेनेव घटादिज्ञानेनापि ब्रह्माऽज्ञाननिवृत्तिः किं न स्यात् † । न च तस्य ब्रह्माविषयत्वान्न ततो ब्रह्माज्ञाननिवृत्तिरिति वाच्यम् । घटः सन्नित्यादिबुद्धिवृत्तेः सद्रूपब्रह्मविषयत्वोपगमात् । न च तत्र घटाद्याकारवृत्त्या तदज्ञाननिवृत्तौ स्वतः स्फुरणादेव तदवच्छिन्नचैतन्यं सदिति प्रकाशते न तस्य घटाद्याकारवृत्तिविषयत्वमिति वाच्यम् । तदभावे घटविषयं ज्ञानं तदवच्छिन्नचैतन्यविषयमज्ञानमिति भिन्नविषयेण ज्ञानेन तन्निवृत्तेरयोगात् । जडे आवरणकृत्याभावेन ‡ घटस्याज्ञानाविषयत्वात् । न च घटादिवृत्तेस्तदवच्छिन्नचैतन्यविषयत्वेऽप्यखण्डानन्दाकारत्वाभावान्न ततो मूलाज्ञाननिवृत्तिरिति वाच्यम् । वेदान्तजन्यसाक्षात्कारेपि तदभावात् । न हि तत्राखण्डत्वमानन्दत्वं वा कश्चिदस्ति प्रकारः वेदान्तानां संसर्गागोचरप्रमाजनकत्वलक्षणाखण्डार्थत्वहानापत्तेः । न च वेदान्तजन्यज्ञानादेव तन्निवृत्तिनियम इति वाच्यम् । क्लृप्ताज्ञाननिवर्तकत्वप्रयोजकरूपस्य ज्ञानान्तरेपि सद्भावे तथा नियन्तुमशक्यत्वात् § । न च

* विचारप्राचीनमध्ययनगृहीतवेदान्तजन्यज्ञानम् । टी॰

† घटादिवृत्तेरपि मूलाज्ञानविषयचैतन्यविषयकत्वाविशेषादित्याक्षेपाभिप्रायः । टी॰

‡ जडस्य जडत्वादेव प्रमाणानवतारदशायामप्रकाशोपपत्त्या जडस्याप्रकाशार्थमावरणकल्पनायोगादित्यर्थः । टी॰

§ वेदान्तजन्यज्ञाने क्लृप्तस्य मूलाज्ञाननिवर्तकत्वप्रयोजकरूपस्य मूलाज्ञानसमानविषयकत्वसत्तानिश्चयरूपत्वाप्रतिबद्धत्वलक्षणस्य निदिध्यासनपरिपाककाले चक्षुरादिजन्यघटादिज्ञानेपि सत्त्वे सति वेदान्तजन्यज्ञानादेव मूलाज्ञाननिवृत्तिर्न तु घटादिज्ञानादिति नियन्तुमयुक्तत्वाद् वेदान्तजन्यत्वस्यापि सत्तानिश्चयरूपत्वादेरिव प्रयोजकविशेषणत्वे गौरवान्मानाभावाच्चेति भावः । टी॰

घटाद्याकारवृत्तिविषयस्यावच्छिन्नचैतन्यस्य कल्पितत्वेन यन्मूलाज्ञानविषयभूतं सत्यमनवच्छिन्नं चैतन्यं तद्विषयत्वाभावाद् घटादिवृत्तीनां निवर्त्यत्वाभिमताज्ञानसमानविषयत्वलक्षणं क्लृप्तं प्रयोजकमेव नास्तीति वाच्यम् । तथावच्छेदकांशस्य कल्पितत्वे ऽप्यवच्छेद्यांशस्याकल्पितमूलाज्ञानविषयचैतन्यरूपत्वात्तस्य कल्पितत्वे घटवज्जडतयाऽवस्थाज्ञानं प्रत्यपि विषयत्वायोगेनावस्थाज्ञानस्य मूलाज्ञानविषयाऽकल्पितचैतन्यविषयत्वस्य वक्तव्यतया तन्निवर्तकघटादिज्ञानस्यापि तद्विषयत्वावश्यंभावेन तत्पक्षेपि ततो मूलाऽज्ञाननिवृत्तिप्रसङ्गस्यापरिहारात् * । अत्राहुराचार्याः । न चैतन्यं चक्षुरादिजन्यवृत्तिविषयः न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चिदेनं पराञ्चि खानि व्यतृणात् स्वयंभूस्तस्मात्पराङ् पश्यति नान्तरात्मन्नित्यादिश्रुत्या तस्य परमाण्वादिवच्चक्षुराद्ययोग्यत्वोपदेशादौपनिषदमितिविशेषणाच्च । न च सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थित इत्यादिवार्तिकविरोधः तस्य घटाद्याकारवृत्त्युदये सत्यावरणाभिभवात्स्वप्रभं सद्रूपं ब्रह्म घटः सन्निति घटवद्व्यवहार्यं भवतीत्यौपचारिकघटादिवृत्तिवेद्यत्वपरत्वात् † । आवरणाभिभावकत्वं च घटादिज्ञानस्य घटादिविषयत्वादेवोपपन्नं घटादेरप्यज्ञानविषयत्वाद् घटं न जानामि घटज्ञानेन घटाज्ञानं नष्टमित्यवस्थाज्ञानानां घटादिविषयत्वानुभवात् । न च तथावरणकृत्याभावादज्ञानाङ्गीकारो न युक्तः तद्भासकस्य तदवच्छिन्नचैतन्यस्यावरणादेव तदप्रकाशोपपत्तेरिति वाच्यम् । उक्तभङ्ग्या जडस्य साक्षादज्ञानविषयत्वप्रतिक्षेपेपि जडावच्छिन्नचैतन्यप्रकाशस्याज्ञानेनावरणं ततो नित्यचैतन्यप्रकाशसंसर्गेपि जडस्य नास्ति न प्रकाशत इत्यादिव्यवहारयोग्यत्वमिति परम्परयाऽज्ञानविषयत्वाभ्युपगमात् । साक्षात्परंपरया वा यदज्ञानावरणीयं तद्विषयस्यैव ज्ञानस्य तदज्ञाननिवर्तकत्वप्रयोजकशरीरे निवेशात् ‡ । न चैवं घटादीनामुक्तरीत्या मूलाऽज्ञानविषयत्वमपि स्यादिति घटादिसाक्षात्कारादेव मूलाज्ञाननिवृत्त्यापत्तिः । फलबलात्तदज्ञानकार्यातिरिक्ततद्विषयविषयस्यैव तन्नि-

* घटादिज्ञानस्यापि वेदान्तजन्यज्ञानस्येव मूलाज्ञानसमानविषयकत्वादिति भावः । टी॰

† यथा घटस्य घटगोचरवृत्त्यधीनव्यवहारविषयत्वं तथा घटाद्यधिष्ठानसद्रूपब्रह्मणोपि घटादिवृत्त्यधीनव्यवहारविषयत्वमस्तीत्यनेन गुणेन सद्रूपं ब्रह्म घटादिप्रत्ययवेद्यमिति वार्तिककारैरुक्तमित्यर्थः । टी॰

‡ ज्ञानस्याज्ञानसमानविषयकत्वमात्रं विरोधप्रयोजकशरीरे प्रविष्टं न तु सर्वांशेपि समानविषयकत्वं गौरवादिति भावः । टी॰

वर्तकत्वे तन्त्रत्वात् । अथ वा मूलाज्ञानस्यैव जडं न विषयः अवस्थाज्ञानानां त्ववच्छिन्नचैतन्याश्रितानां तत्तज्जडमेव विषयः अन्यथा चाक्षुषवृत्या चन्दनखण्डे चैतन्याभिव्यक्तौ तत्संसर्गिणो* गन्धस्यापरोक्ष्यापत्तेः तदनभिव्यक्तौ चन्दनतद्रूपयोरप्यप्रकाशापत्तेः । न च चाक्षुषवृत्त्या चन्दनतद्रूपावच्छिन्नचैतन्ययोरभिव्यक्तया तयोः प्रकाशः गन्धाकारवृत्यभावेन गन्धावच्छिन्नचैतन्यस्यानभिव्यक्तया तस्याप्रकाशश्चेति वाच्यम् । चैतन्यस्य द्विगुणीकृत्य वृत्यभावेनैकद्रव्यगुणानां स्वाश्रये सर्वत्र व्याप्य वर्तमानानां पृथक् पृथग् गगनावच्छेदकत्वस्येव चैतन्यावच्छेदकत्वस्या† प्यसंभवात्तेषां स्वाश्रयद्रव्यावच्छिन्नचैतन्येनैव शुक्तीदमंशावच्छिन्नचैतन्येन शुक्तिरजतवत्प्रकाश्यतया तस्याभिव्यक्तौ गन्धस्यापि प्रकाशस्यानभिव्यक्तौ रूपादेरप्यप्रकाशस्य चापत्तेः । न च गन्धाकारवृत्त्युपरक्ते एव चैतन्ये गन्धः प्रकाशतइति नियमः प्रकाशसंसर्गस्यैव प्रकाशमानशब्दार्थत्वेनासत्यामपि तदाकारवृत्तावनावृतप्रकाशसंसर्गे ऽप्रकाशमानत्वकल्पनस्य विरुद्धत्वात् । अभिव्यक्तस्य च गन्धोपादानचैतन्यस्य गन्धाऽसंसर्गात्यसंभवात् । तस्माद्यथा चैत्रस्य घटवृत्तौ तं प्रत्यावरकस्यैवाज्ञानस्य निवृत्तिरिति तस्यैव विषयप्रकाशो नान्यस्य तथा तत्तद्विषयाकारवृत्त्या तत्तदावरकाज्ञानस्यैव निवृत्तेर्न विषयान्तरस्यापरोक्ष्यमनावृतस्यैवार्थस्य संविदभेदापरोक्ष्यमित्युपगमादिति प्रमातृभेदेनेव विषयभेदेनाप्येकत्र चैतन्ये ऽवस्थाज्ञानभेदस्य वक्तव्यतयाऽवस्थाज्ञानानां तत्तज्जडविषयकत्वमिति घटादिवृत्तीनां नावस्थाऽज्ञाननिवर्तकत्वे का चिदनुपपत्तिः न वा मूलाऽज्ञाननिवर्तकत्वापत्तिः‡ । न चैवमपि जीवविषयाया अहमाकारवृत्तेर्मूलाज्ञाननिवर्तकत्वापत्तिः । तस्याः स्वयंप्रकाशमानचित्संवलिताऽचिदंशमात्रविषयत्वात् । सोहमिति प्रत्यभिज्ञाया अपि स्वयंप्रकाशचैतन्येन्तःकरणवैशिष्ट्येन सह पूर्वापरकालवैशिष्ट्यमात्रविषयत्वेन चैतन्यविषयत्वाभावादिति ॥

के चित्तु घटादिवृत्तीनां तत्तदवच्छिन्नचैतन्यविषयत्वमभ्युपगम्य सर्वमानप्रसक्तौ च सर्वमानफलाश्रयात् श्रोतव्येति वचः प्राह वेदान्तावरुरु-

---

* चन्दननिष्ठगन्धस्यापि चन्दनस्येवापरोक्ष्यापत्तिरभिव्यक्तचैतन्यसंसर्गित्वस्योभयत्राविशेषात् । जडस्यावृतत्वपक्षे तु नायं दोषः चाक्षुषवृत्त्या गन्धावरणानिवृत्तेरित्यर्थः । टी॰

† चैतन्यस्य निरवयवतया द्रव्ये द्रव्यावच्छेदेनैकगुणावच्छेदेनापरा वृत्तिर्न संभवतीत्यर्थः । टी॰

‡ घटादिवृत्तीनां मूलाज्ञानविषयचैतन्यविषयकत्वानभ्युपगमादित्यर्थः । टी॰

त्सये * तिवार्तिकोक्तश्रोतव्यवाक्यार्थवेदान्तनियमविध्यनुसारेण वेदान्तजन्यमेव नियमादृष्टसहितं ब्रह्मज्ञानमप्रतिबद्धं ब्रह्माज्ञाननिवर्तकमिति न घटादिज्ञानात्तन्निवृत्तिप्रसङ्ग इत्याहुः ॥

अन्ये तु तत्त्वमस्यादिवाक्यजन्यं जीवब्रह्माभेदगोचरमेव ज्ञानं मूलाज्ञाननिवर्तकं मूलाज्ञानस्य तदभेदगोचरत्वादिति न चैतन्यस्वरूपमात्रगोचराद् घटादिज्ञानात्तन्निवृत्तिप्रसङ्गः । न चाभेदस्य तत्त्वावेदकप्रमाणबोध्यस्य चैतन्यातिरेके द्वैतापत्तेश्चैतन्यमात्रमभेद इति तद्गोचरघटादिज्ञानमप्यभेदगोचरमिति वाच्यम् । न ह्यभेदज्ञानमिति विषयतो विशेषं ब्रूमः किं तु तत्त्वंपदवाच्यार्थधर्मिद्वयपरामर्शादिरूपकारणविशेषाधीनेन स्वरूपसंबन्धविशेषेण चैतन्यविषयत्वमेव तदभेदज्ञानत्वम् । यथा हि विशेषणविशेष्यतत्संबन्धगोचरत्वाविशेषेपि विशिष्टज्ञानस्य विशेषणज्ञानादिकारणविशेषाऽधीनस्वरूपसंबन्धविशेषेण तन्त्रितयगोचरत्वमेव समूहालम्बनव्यावृत्तं विशिष्टज्ञानत्वं यथा वा स्थाणुत्वपुरुषत्ववानित्याहार्य † व्यावृत्तं संशयत्वं विषयतो विशेषानिरूपणात् तथा घटादावपि सोयं घट इत्यादिज्ञानस्य स्वरूपसंबन्धविशेषेण घटादिविषयत्वमेव केवलघटशब्दादिजन्यज्ञानव्यावृत्तं तदभेदज्ञानत्वमतिरिक्ताभेदानिरूपणात् । अभावसादृश्यादीनामधिकरणप्रतियोग्यादिभिः स्वरूपसंबन्धयुक्तानामधिकरणेनाऽऽधाराधेयभावरूपःस्वरूपसंबन्धविशेषः प्रतियोगिना प्रतियोग्यनुयोगिभावरूप इत्यादिप्रकारेण स्वरूपसंबन्धे ऽवान्तरविशेषकल्पनवद् वृत्तीनां विषयेपि संयोगतादात्म्ययोरतिप्रसक्त्या विषयैर्विषयविषयिभावरूपस्वरूपसंबन्धवतीनां विषयविशेषनिरूपणाऽसंभवे ‡ क्लृप्तएव स्वरूपसंबन्धे अवान्तरविशेषकल्पनेनाभेदज्ञानत्वादिपरस्परवैलक्षण्यनिर्वाहाच्च । एवं च ब्रह्मज्ञानस्याभेदाख्यकिंचित्संसर्गगोचरत्वानभ्युपगमान्न वेदान्तानामखण्डार्थत्वहानिरपीत्याहुः ॥

ननु घटादिज्ञानवद्ब्रह्मज्ञानस्यापि न मूलाज्ञाननिवर्तकत्वं युक्तं निव-

---

* सर्वेषामेव प्रमाणानां फलशब्दितचैतन्यविषयकत्वात् सर्वेषां मानानां प्रसक्तौ वेदान्तानामेवावरोधेच्छया नियमेच्छया श्रोतव्येति वचनं वेदान्तानामेव विचारः कर्तव्य इति । टी॰

† आहार्यवृत्तीति २ पु॰ पाठः ।

‡ विषये निर्विशेषचैतन्यात्मके विशेषाधानासंभवेपि स्वरूपसंबन्धान्तर्गततया क्लृप्तएव ज्ञानस्वरूपात्मके संबन्धे सामग्रीविशेषबलाद्विशेषाधानसंभवाच्चोक्तदोष इति भावः । टी॰

नैकत्वे तदवस्थानासहिष्णुत्वरूपस्य विरोधस्य तन्त्रत्वात् कार्यस्य चोपादानेन सह तादृशविरोधाभावादिति चेन्न । कार्यकारणयोरन्यत्र तादृशविरोधादर्शने ऽप्येकविषयज्ञानाऽज्ञानप्रयुक्तस्य तादृशविरोधस्यात्र * सत्त्वात्कार्यकारणयोरप्यग्निसंयोगपटयोस्तादृशविरोधदृष्टेश्च । न चाग्निसंयोगे सत्यवयवविभागप्रक्रिययाऽसमवायिकारणसंयोगनाशादेव पटनाशो नाग्निसंयोगादिति वाच्यम् । दग्धपटेपि पूर्वसंस्थानानुवृत्तिदर्शनेन मुद्गरचूर्णीकृतघटवदवयवविभागादर्शनात् तत्रावयवविभागादिकल्पनाया अप्रामाणिकत्वात् । नापि तत्र तन्तूनामपि दाहेन समवायिकारणनाशात्पटनाश इति युक्तम् । अंशुतन्त्वादिभिः सह युगपदेव पटस्य दाहदर्शनेन क्रमकल्पनाऽयोगात् । यतो वस्त्रांशावयवनाश † स्तत्रावयवे ऽग्निसंयोगादेव नाशस्य वाच्यत्वात् ॥

(१२) नन्वस्त्वेतदेवं तथापि सविलासा ‡ ज्ञाननाशकमिदं ब्रह्मज्ञानं कथं नश्येन्नाशकान्तराभावादिति चेद् यथा कतकरजः सलिलेन संयुज्य पूर्वसंयुक्तरजोन्तरविश्लेषं जनयत्स्वविश्लेषमपि जनयति तथात्मन्यभ्यस्यमानं ब्रह्मज्ञानं पूर्वाध्यस्तसर्वप्रपञ्चं निवर्तयत्स्वात्मानमपि निवर्तयतीति केचित् ॥

अन्ये त्वन्यन्निवर्त्य स्वयमपि निवृत्तौ दग्धलोहपीताम्बुन्यायमुदाहरन्ति § । अपरे त्वत्र दग्धतृणकूटदहनोदाहरणमाहुः ॥

न च ध्वंसस्य प्रतियोग्यतिरिक्तजन्यत्वनियमः अप्रयोजकत्वाद् निरिन्धनदहनादिध्वंसे व्यभिचाराच्च । न च ध्वंसस्य प्रतियोगिमात्रजन्यत्वे ऽतिप्रसङ्गात्कारणान्तरमवश्यं वाच्यम् । निरिन्धनदहनादिध्वंसे ऽपि कालादृष्टेश्वरेच्छादिकारणान्तरमस्तीति वाच्यम् । अतिप्रसङ्गापरिज्ञानात् । न च घटादिध्वंसस्यापि कारणान्तरनिरपेक्षत्वं स्यादित्यतिप्रसङ्गः ध्वंसमात्रे कारणान्तरनैरपेक्ष्याऽनभिधानात् । न च घटध्वंसदृष्टान्तेन ब्रह्मज्ञानध्वंसस्य कारणान्तरापेक्षासाधनं तद्दृष्टान्तेन मुद्गरपतनापेक्षाया अपि साधनापत्तेः । नापि ज्ञानध्वंसत्वसाम्याद् घटज्ञानादिध्वंसस्यापि कारणान्तरनैरपेक्ष्यं स्यादित्यति-

* उपादानोपादेययोर्निवर्त्यनिवर्तकभावप्रयोजकविरोधो नास्तीत्युत्सर्गः स च ब्रह्मज्ञानतदुपादानस्थले ऽपोद्यते निवर्त्यनिवर्तकभावप्रयोजकतया लोके क्लृप्तसमानविषयज्ञानाज्ञानभावस्य विशेषरूपतया तेन सामान्यरूपस्योपादानोपादेयभावप्रयुक्ताविरोधस्य बाधोपपत्तेरित्यर्थः । टी॰

† नाधस्तादवयवनाश इति ३ पु॰ पाठः । ‡ स्वकार्यसहितेत्यर्थः ।

§ यथा वह्नितप्तलोहपिण्डे प्रक्षिप्तमम्बु लोहगतमग्निं नाशयदात्मानमपि नाशयति तथेत्यर्थः । टी॰

प्रसङ्गः सेन्धनानलध्वंसस्य जलसेकादिदृष्टकारणापेक्षत्वेपि निरिन्धनानलध्वंसस्य तदनपेक्षत्ववज्ज्ञायज्ज्ञानध्वंसस्य विशेषगुणान्तरापेक्षत्वेपि * सुषुप्तिपूर्वज्ञानध्वंसस्य तदनपेक्षत्ववच्च † मूलाज्ञाननिवर्तकज्ञानध्वंसस्य तदनपेक्षत्वोपपत्तेः। नापि कारणान्तरनैरपेक्ष्ये स्वोत्पत्त्युत्तरक्षणएव नाशः स्यादित्यतिप्रसङ्गः इष्टापत्तेः। तदुत्पत्त्युत्तरक्षणे एव ब्रह्माध्यस्तनिखिलप्रपञ्चदाहेन तदन्तर्गतस्य तस्यापि तदैव दाहाभ्युपगमात्। निरन्धनदहनध्वंसन्यायेन ब्रह्मज्ञानध्वंसस्यापि कालादृष्टेश्वरेच्छादिकारणान्तरजन्यत्वेप्यविरोधाच्च। सर्वप्रपञ्चनिवृत्त्युत्तरमेकशेषस्य ब्रह्मज्ञानस्य निवृत्तिरित्यनभ्युपगमेन युगपत्सर्वदाहे पूर्वक्षणे चिदविद्यासंबन्धरूपस्य द्रव्यान्तररूपस्य वा कालस्येश्वरप्रसादरूपस्यान्तःकरणगुणविशेषरूपस्य वाऽऽदृष्टस्यान्येषां च सत्त्वात्। न च तत्र ज्ञानातिरिक्तकारणापेक्षणे ब्रह्मज्ञानस्यामिथ्यात्वप्रसङ्गः ज्ञानैकनिवर्त्यत्वं मिथ्यात्वमित्यभ्युपगमादिति वाच्यम्। ज्ञानाघटितसामग्र्यऽनिवर्त्यत्वे ‡ सति ज्ञाननिवर्त्यत्वस्य तदर्थत्वात्। नान्यः पन्था इति श्रुतेरपि तत्रैव तात्पर्यात्। अतो युक्त एव दग्धदाह्यदहनादिन्यायः॥

के चित्तु वृत्तिरूपं ब्रह्मज्ञानं नाज्ञानतन्मूलप्रपञ्चनिवर्तकम् अज्ञानस्य प्रकाशनिवर्त्यत्वनियमेन जडरूपवृत्तिनिवर्त्यत्वायोगात्। किं तु तदाऽऽरूढचैतन्यप्रकाशस्तन्निवर्तकः स्वरूपेण तस्याज्ञानादिसाक्षितया तदनिवर्तकत्वेपि अखण्डाकारवृत्त्युपारूढस्य तन्निवर्तकत्वोपपत्तेः। तृणादेर्भासिकाप्येषा सूर्य्यदीप्तिस्तृणं दहेत् सूर्यकान्तमुपारुह्य तं न्यायं तत्र योजयेदित्यभियुक्तोक्तेः। एवं च यथा किं चित्काष्ठमुपारुह्य ग्रामनगरादिकं दहन्वह्निर्दहत्येव तदपि काष्ठं तथा चरमवृत्तिमुपारुह्य निखिलं प्रपञ्चमुन्मूलयन्नखण्डचैतन्यप्रकाशस्तन्निवर्तनेपि प्रगल्भतइति न तन्नाशे का चिदनुपपत्तिरित्याहुः॥

अन्ये तु ब्रह्मज्ञानमज्ञानस्यैव निवर्तकं ज्ञानाज्ञानयोरेव साक्षाद्विरोधात् §। प्रपञ्चस्य तूपादाननाशान्नाश इति प्रपञ्चान्तर्गतस्य ब्रह्मज्ञानस्यापि

---

* विरोधिविशेषगुणेति २ पु॰ पाठः।

† सुषुप्तिपूर्वज्ञानादिगुणस्य नाशकगुणान्तरापेक्षायां तस्यापि नाशकगुणान्तरकल्पनापत्त्या सुषुप्त्युच्छेदप्रसङ्गः स्यात्। टी॰

‡ प्रपञ्चसत्यत्वमतेपि घटादेर्ज्ञाननिवर्त्यत्वमस्ति घटं नाशयामीत्यादिज्ञानपूर्वकं मुद्गरपातादिना तन्नाशदर्शनादिति तद्वारणाय सत्यन्तमात्मन्यतिव्याप्तिवारणाय विशेष्यमिति भावः। टी॰

§ विरोधप्रयोजकस्य समानविषयत्वादेरज्ञानएव संभवादिति भावः। टी॰

तत एव नाशः । न च प्रपञ्चस्य ज्ञानानिवर्त्यत्वे मिथ्यात्वानुपपत्तिः प्रपञ्चनिवृत्तेः साक्षाज् ज्ञानजन्यत्वाभावेपि ज्ञानजन्याज्ञाननाशजन्यत्वात्साक्षात्परम्परया वा ज्ञानैकनिवर्त्यत्वं मिथ्यात्वमित्यङ्गीकारात् । एवं च तत्त्वसाक्षात्कारोदयेपि जीवन्मुक्तस्य देहादिप्रतिभास उपपद्यते । प्रारब्धकर्मणा प्रतिबन्धेन तत्त्वसाक्षात्कारोदयेपि प्रारब्धकर्मतत्कार्यदेहादिप्रतिभासानुवृत्त्युपादानाविद्यालेशानिवृत्त्युपपत्तेः । अज्ञानवत्प्रपञ्चस्यापि साक्षाद्ब्रह्मसाक्षात्कारनिवर्त्यत्वे नायमुपपद्यते ‡ ऽतिविरोधिनि ब्रह्मसाक्षात्कारे सति प्रारब्धकर्मणः स्वयमवस्थानासंभवेनाविद्यालेशनिवृत्तिप्रतिबन्धकत्वायोगादित्याहुः ॥

‡ जीवन्मुक्तस्य देहादिप्रतिभास इत्यर्थः । टी·

## इति तृतीयः परिच्छेदः ॥





# चतुर्थः परिच्छेदः

१) अथ को ऽयमविद्यालेशो यदनुवृत्त्या जीवन्मुक्तिः । आवरणविक्षेपशक्तिमत्या मूलाविद्यायाः प्रारब्धकर्मवर्तमानदेहाद्यनुवृत्तिप्रयोजको विक्षेपशक्त्यंश इति केचित् ॥

क्षालितलशुनभाण्डानुवृत्तलशुनवासनाकल्पो ऽ * विद्यासंस्कार इत्यन्ये ॥

दग्धपटन्यायेनानुवृत्ता मूलाविद्या वेत्यपरे ॥

सर्वज्ञात्मगुरवस्तु विरोधिसाक्षात्कारोदये लेशतो ऽप्यविद्यानुवृत्त्यसंभवा † ज्जीवन्मुक्तिशास्त्रं श्रवणादिविध्यर्थवादमात्रं शास्त्रस्य जीवन्मुक्तिप्रतिपादने प्रयोजनाभावात् । अतः कृतनिदिध्यासनस्य ब्रह्मसाक्षात्कारोदयमात्रेण सविलासवासनाविद्यानिवृत्ति ‡ रित्यपि कं चित्पक्षमाहुः ॥

२) अथ केयमविद्यानिवृत्तिः । आत्मैवेति ब्रह्मसिद्धिकारः । न च तस्य नित्यसिद्धत्वाज् ज्ञानवैयर्थ्यम् । असति ज्ञाने अनर्थहेत्वविद्याया विद्यमानतया अनर्थमपि तिष्ठेदिति तदन्वेषणात् । यस्मिन्सत्यग्रिमक्षणे यस्य सत्त्वं यद्व्यतिरेके चाभावस्तत्तत्साध्यमितिलक्षणानुरोधेन ब्रह्मरूपाया अप्यविद्यानिवृत्तेर्ज्ञानसाध्यत्वाच्च । ज्ञाने सत्यग्रिमक्षणे आत्मरूपाविद्यानिवृत्तिसत्त्वं तद्व्यतिरेके तत्प्रतियोग्यविद्यारूपस्तदभाव इत्युक्तलक्षणसत्त्वात् ॥

आत्मान्येवा § विद्यानिवृत्तिः । सा च न सती अद्वैतहानेः । नाप्यसती ज्ञानसाध्यत्वायोगात् । नापि सदसद्रूपा विरोधात् । नाप्यनिर्वाच्या अनिर्वाच्यस्य सादेरज्ञानोपादानकत्वनियमेन मुक्तावपि तदुपादानाज्ञानानुवृत्त्यापत्तेः ज्ञाननिवर्त्यत्वापत्तेश्च । किं तूक्तप्रकारचतुष्टयोत्तीर्णा ‖ पञ्चमप्रकारेत्यानन्दबोधाचार्याः ॥

अविद्यावत्तन्निवृत्तिरप्यनिर्वाच्यैव । न च तदनुवृत्तौ तदुपादानाज्ञानस्याप्यनुवृत्तिनियमादनिर्मोक्षप्रसङ्गः तदनुवृत्तौ प्रमाणाभावात् । उत्पत्तेः प्रथम-

---

* तत्त्वज्ञानेनान्तःकरणाद्युपादानभूताविद्याया निवृत्तावप्यविद्याजन्यः कश्चिद्देहादिस्थितिप्रयोजको वासनाविशेष इत्यर्थः । टी॰ † अविद्यावृत्त्यसंभवादिति २ पु॰ पाठः ।

‡ विलासेन वासनया च सहैवाविद्यानिवृत्तिरित्यर्थः । टी॰

§ आत्मन्येवेति २ पु॰ पाठः । ‖ प्रकारचतुष्टयाभाववतीत्यर्थः ।

समयमात्रसंसर्गिभावविकारत्ववद् निवृत्तेरपि चरमसमयमात्रसंसर्गिभावविकारत्वोपपत्तेः। अत एव यथा पूर्वं पश्चाच्चोत्पत्स्यते उत्पन्न इति भाविभूतभावेन व्यवह्रियमाणाया उत्पत्तेः प्रथमसमयमात्रे * उत्पद्यतइति वर्त्तमानव्यवहारस्तथा पूर्वं पश्चाच्च निवर्त्तिष्यते निवृत्त इति भाविभूतभावेन व्यवह्रियमाणाया निवृत्तेश्चरमसमयमात्रे निवर्त्तते नश्यति ध्वंसते इति वर्त्तमानव्यवहारः। निवृत्तेरनुवृत्तौ तु चिरशकलितेपि घटे इदानीं निवर्त्ततइत्यादिव्यवहारः स्यात्। आख्यातानां प्रकृत्यर्थगतवर्त्तमानत्वाद्यर्थाभिधायित्वात्। ननु च तेषां स्वस्वाभिहितसंख्याश्रयप्रकृत्यर्थकर्तृकर्मगतवर्त्तमानत्वाद्यर्थाभिधायित्वं स्वाभिहितप्रकृत्यर्थानुकूलव्यापारगतवर्त्तमानत्वाद्यभिधायित्वं वास्तु तथा च निवृत्तिक्रियाकर्त्तुश्चिरं चूर्णितस्य घटस्य तद्गत † निवृत्त्यनुकूलव्यापारस्य चावर्त्तमानत्वान् नोक्तातिप्रसङ्ग इति चेन्न। आद्ये उत्पन्नेपि घटे उत्पद्यतइतिव्यवहारापत्तेः उत्पत्तिक्रियाकर्त्तुर्घटस्य विद्यमानत्वात्। द्वितीये आमवातजडीकृतकलेबरे उत्थानानुकूलयत्नवत्युत्थानानुदये ऽप्युत्तिष्ठतीतिव्यवहारापत्तेः आख्यातार्थस्य प्रकृत्यर्थभूतोत्थानानुकूलस्य यत्नरूपव्यापारस्य वर्त्तमानत्वात्। तस्मात्प्रकृत्यर्थगतमेव वर्त्तमानत्वाद्याख्यातार्थ इति ध्वंसस्य स्थायित्वे चिरनिवृत्ते ऽपि घटे निवर्त्ततइति व्यवहारो दुर्वारः। यदि च मुद्गरादिशकलिते घटे ध्वंसो नाम कश्चिदभावस्तत्प्रतियोगिकः स्थायिभूतलाद्याश्रित उपेयते तदा कपालमालापसरणे तदनपसरणे ऽपि मणिकशरावादिकपालव्यावृत्तकपालसंस्थानविशेषादर्शने च किमिति स प्रत्यक्षो न स्यात्। कपालसंस्थानविशेषादिनाऽनुमेयो घटादिध्वंसो न प्रत्यक्ष इति चेत् तर्हि ‡ तेन मुद्गरपातकालीनस्योत्पत्तिवद्भावविकाररूपतया प्रतियोग्याश्रितस्य ध्वंसस्यानुमानं संभवतीति न ततः पश्चादनुवर्त्तमानप्रतियोग्यधिकरणाश्रिताभावरूपध्वंससिद्धिः। इह भूतले घटो ध्वस्त इति भूतले ध्वंसाधिकरणत्वव्यवहारस्येह भूतले घट उत्पन्न इतिवद्भावविकारयुक्तप्रतियोग्यधिकरणत्वविषयत्वोपपत्तेः। घटध्वंसानन्तरं भूतले घटाभावव्यवहारस्य घटापसरणानन्तरं तद-

---

* अनिर्वाच्यप्रथमसमयमात्रे इति ३ पु॰ पाठः। २ पु॰ प्रथमसमयमात्रे इति नास्ति।

† घटगतेत्यर्थः। टी॰

‡ अतीतस्यापि ध्वंसस्यानुमानसंभवादनुमानेन ध्वंसमात्रसिद्धावपि नानुमानबलाद् ध्वंसस्य पराभिमतं स्थायित्वं सिध्यतीत्यर्थः। टी॰

भावव्यवहारवत्समयविशेषसंसर्गात्यन्ताभावालम्बनतोपपत्त्या ध्वंसविषयत्वस्या * कल्पनीयत्वाच्च । एवं सति घटोत्पत्तेः पूर्वं तदभावव्यवहारो ऽप्यत्यन्ताभावेन चरितार्थ इति प्रागभावोपि न स्यादिति चेत् सोपि मा भूत् । नन्वेवं प्रागभावाधारकालः पूर्वकालः ध्वंसाधार उत्तरकाल इति निर्वचनासंभवात्काले पूर्वोत्तरादिव्यवहारः किमालम्बनः स्याद् घटादिषु प्रतियोगित्वादिव्यवहारवदखण्डकिंचिद्धर्मगोचरो ऽस्तु । अभावरूपस्यापिध्वंसाभ्युपगमे ऽपि तेषु ध्वंसत्वादेरखण्डस्य वक्तव्यत्वात् । न च जन्याभावत्वरूपं सखण्डमेव ध्वंसत्वं ध्वंसप्रागभावरूपस्य घटस्य तद्ध्वंसत्वापत्तेः † । न च सप्तमपदार्थरूपाभावत्वं विवक्षितं घटस्य प्रागभावं प्रत्यपि ध्वंसत्वाभावप्रसङ्गेन घट ‡-काले प्रागभावोत्तरकालत्वव्यवहारस्य निरालम्बनत्वापत्तेः । न च प्रतियोग्यतिरिक्तः प्रागभावध्वंसस्तथा सति तुल्यन्यायतया ध्वंसप्रागभावेपि प्रतियोग्यतिरिक्तः स्यादिति प्रागभावध्वंसस्यापि प्रागभावो ऽन्यस्तस्यापि कश्चिद् ध्वंसस्तस्यापि प्रागभावोन्य इत्यप्रामाणिकानवधिकध्वंसप्रागभावकल्पनापत्तेः । न चान्यद् ध्वंसत्वमात्माश्रयादिशून्यं निर्वक्तुं शक्यम् । एवं प्रागभावत्वमपीत्यन्यत्र विस्तरः । तस्मान्न पूर्वं प्रागभावः न पश्चाद् ध्वंसाभावः मध्ये परं कियत्कालमनिर्वचनीयोत्पत्तिस्थितिध्वंसरूपभावविकारवान् घटाद्यध्यासः । एवं चाविद्यानिवृत्तिरपि ब्रह्मसाक्षात्कारोदयानन्तरक्षणवर्ती कश्चिद्भावविकार इति तस्या मुक्तावनुवृत्त्यभावान्न तदनिर्वाच्यत्वे कश्चिद्दोष इति अद्वैतविद्याचार्याः । नन्वेवमविद्यानिवृत्तेः क्षणिकत्वे मोक्षः स्थिरपुरुषार्थो न स्यादिति चेद् भ्रान्तोसि । न ह्यविद्यानिवृत्तिः स्वयमेव पुरुषार्थ इति तस्या ज्ञानसाध्यत्वमुपेयते तस्याः सुखदुःखाभावेतरत्वात् § । किं त्वखण्डानन्दावरकसंसारदुःखहेत्वविद्योच्छेदे अखण्डानन्दस्फुरणं संसारदुःखोच्छेदश्च भवतीति तदुपयोगितया तस्यास्तत्त्वज्ञानसाध्यत्वमुपेयते ॥

चित्सुखाचार्यास्तु दुःखाभावोपि मुक्तौ न स्वतःपुरुषार्थः । सर्वत्र दुःखाभावस्य स्वरूपसुखाभिव्यक्तिप्रतिबन्धकाभावतया सुखशेषत्वात्सुखस्यैव ‖

* कॢप्ताभावेनैव व्यवहारोपपत्तावतिरिक्तप्रध्वंसाभावो न कल्पनीय इति भावः । टी॰

† भावान्तरमभावोन्यः कया चित्तु व्यपेक्षयेति न्यायादिति भावः ।

‡ सिद्धान्ते ऽधिकरणातिरिक्ताभावानुपगमादिति भावः ।

§ सुखेतरत्वाद् दुःखाभावेतरत्वाच्च । टी॰

‖ सुखं प्रत्युपयोगित्वादित्यर्थः ।

स्वतः पुरुषार्थत्वमन्येषां सर्वेषामपि तच्छेषत्वमिति सुखसाधनताज्ञानस्यैव प्रवर्त्तकत्वे संभवति दुःखाभावस्यापि स्वतःपुरुषार्थत्वं परिकल्प्य तत्साधनप्रवर्त्तकसंग्रहायेष्टसाधनताज्ञानस्येच्छाविषयत्वप्रवेशेन गुरुघटितस्य * प्रवर्त्तकत्वकल्पनाऽयोगात् । न च दुःखाभाव एव स्वतःपुरुषार्थस्तच्छेषतया सुखं काम्यमिति वैपरीत्यापत्तिः । बहुकालदुःखसाध्ये ऽपि क्षणिकसुखजनके निन्दितग्राम्यधर्मादौ प्रवृत्तिदर्शनात् । तत्र क्षणिकसुखकालीनदुःखाभावस्य पुरुषार्थत्वे तदर्थं बहुकालदुःखानुभवायोगात् † । न च तत्र क्षणिकसुखस्य पुरुषार्थत्वेपि दोषतौल्यं भावरूपे सुखे उत्कर्षापकर्षयोरनुभवसिद्धत्वेन क्षणमप्युत्कृष्टसुखार्थं बहुकालदुःखानुभवोपपत्तेः दुःखाभावे तूत्कर्षासंभवात् । तस्मान्मुक्तौ संसारदुःखनिवृत्तिरप्यविद्यानिवृत्तिवत्सुखशेष इत्यनवच्छिन्नानन्दप्राप्तिरेव स्वतःपुरुषार्थ इत्याहुः ॥

(३) नन्वनवच्छिन्नानन्दः प्रत्यग्रूपतया नित्यमेव प्राप्तः । सत्यं नित्यप्राप्तोऽप्यनवच्छिन्नानन्दस्तमावृत्य तद्विपरीतमर्थं प्रदर्शयन्त्याऽविद्यया संसारदशायामसत्कल्पत्वं नीत इत्यकृतार्थता ऽभून्निवर्त्तितायां च तस्यां निरस्तनिखिलानर्थविक्षेपे स्वकण्ठगतविस्मृतकनकाभरणवत्प्राप्यतइवेत्यौपचारिकी तस्य प्राप्यतेति केचित् ॥

अन्ये तु संसारदशायां नास्ति न प्रकाशतइति व्यवहारयोग्यत्वरूपाज्ञानावरणप्रयुक्तस्य ममातिशयानन्दो ‡ नास्तीति प्रत्ययस्य सर्वसिद्धत्वात्तदालम्बनभूतः कश्चिद् ब्रह्मानन्दस्याभावः काल्पनिको यावदविद्यमनुवर्त्तते अविद्यानिवृत्तौ च तन्मूलत्वान्निवर्त्ततइति § यस्मिन्सत्यग्रिमक्षणे इत्यादिलक्षणानुरोधेन मुख्यमेव तस्य प्राप्यत्वमित्याहुः ॥

अपरे त्ववेद्यस्यापुरुषार्थत्वात्संसारदशायां सदप्यनवच्छिन्नसुखमापरोक्ष्याभावान्न पुरुषार्थः । न च स्वरूपज्ञानेनापरोक्ष्यं तदाप्यस्ति तस्य सर्वदा स्वरूपसुखाभिन्नत्वाद् वृत्तिज्ञानेनापरोक्ष्यं तु न मुक्तावपीति वाच्यम् । न हि स्वव्यवहारानुकूलचैतन्याभेदमात्रमापरोक्ष्यं घटावच्छिन्नचैतन्याभिव्यक्तौ तदभिन्नस्य घटगन्धस्याप्यापरोक्ष्यापत्तेः । किं त्वनावृतार्थस्य तदभेदः । तथा

* सुखसाधनत्वज्ञानत्वेन प्रवर्तकत्वे संभवति इच्छाविषयसाधनत्वेन तत्त्वं गौरवान्नोपेयते इति भावः । † क्षणिकसुखार्थं बहुकालिकदुःखानुभवाङ्गीकारस्यायुक्तत्वादित्यर्थः । टी॰
‡ निरतिशयानन्द इति २ । ३ पु॰ पाठः । § ब्रह्मानन्दस्याभाव इति शेषः । टी॰

च्चानावृतत्वांशस्तत्त्वसाक्षात्कारे सत्य एवेति निरतिशयसुखापरोक्ष्यस्य पुरुषार्थस्य विद्याप्राप्यत्वं युक्तमित्याहुः ॥

इतरे त्वस्तु व्यवहारानुकूलचैतन्याभेदमात्रमापरोक्ष्यं * तथा ऽप्यज्ञानमहिम्ना जीवभेदवच्चिदानन्दभेदो ऽप्यध्यस्त इति संसारदशायां पुरुषान्तरस्य पुरुषान्तरचैतन्यापरोक्ष्यवदनवच्छिन्नसुखापरोक्ष्यमपि नास्ति अज्ञाननिवृत्तौ तु चिदानन्दभेदप्रविलयात्तदापरोक्ष्यमिति तस्य विद्यासाध्यत्वमाहुः ॥

3) अथ विद्योदये सत्युपाधिविलयादपेतजीवभावस्य किमीश्वरभावापत्तिरुत शुद्धचैतन्यमात्ररूपेणावस्थानमिति विवेचनीयम् । उच्यते । एकजीववादे तदेकाज्ञानकल्पितस्य जीवेश्वरविभागादिकृत्स्नभेदप्रपञ्चस्य तद्विद्योदये विलयान्निर्विशेषचैतन्यरूपेणैवावस्थानम् । अनेकजीववादमभ्युपगम्य बद्धमुक्तव्यवस्थाङ्गीकारेपि यद्यपि कस्य चिद्विद्योदये तदविद्याकृतप्रपञ्चविलयेपि बद्धपुरुषान्तराविद्याकृतो जीवेश्वरविभागादिप्रपञ्चोनुवर्त्तते तथापि जीव इव ईश्वरोपि प्रतिबिम्बविशेष इतिपक्षे मुक्तस्य बिम्बभूतशुद्धचैतन्यरूपेणैवावस्थानम् । अनेकोपाधिष्वेकस्य प्रतिबिम्बे सत्येकोपाधिविलये तत्प्रतिबिम्बस्य बिम्बभावेनैवावस्थानौचित्येन प्रतिबिम्बान्तरत्वापत्त्यसंभवात् † । तत्संभवे कदा चिज्जीवरूपप्रतिबिम्बान्तरत्वापत्तेरपि दुर्वारत्वेनावच्छेदपक्षइव मुक्तस्य पुनर्बन्धापत्तेः । अत एवानेकजीववादे ऽवच्छेदपक्षो नाद्रियते यदवच्छेदेन मुक्तिस्तदवच्छेदेनान्तःकरणान्तरसंसर्गे पुनरपि बन्धापत्तेः । प्रतिबिम्बो जीवः बिम्बस्थानीय ईश्वर उभयानुस्यूतं शुद्धचैतन्यमिति पक्षे तु मुक्तस्य यावत्सर्वमुक्ति सर्वज्ञत्वसर्वकर्तृत्वसर्वेश्वरत्वसत्यकामत्वादिगुणपरमेश्वरभावापत्तिरिष्यते । यथानेकेषु दर्पणेष्वेकस्य मुखस्य प्रतिबिम्बे सत्येकदर्पणापनये तत्प्रतिबिम्बो बिम्बभावेनावतिष्ठते न तु मुखमात्ररूपेण तदानीमपि दर्पणान्तरस्य सन्निधानप्रयुक्तस्य मुखे बिम्बत्वस्यानपायात् । तथा एकस्य ब्रह्मचैतन्यस्यानेकेषूपाधिषु प्रतिबिम्बे सत्येकस्मिन् प्रतिबिम्बे विद्योदये तेन ‡ तदुपाधिविलये तत्प्रतिबिम्बस्य बिम्बभावेनावस्थानावश्यंभावात् । न च मुक्तस्याविद्याभावात्सत्यकामादिगुणविशिष्टसर्वेश्वरत्वानुपपत्तिः तदविद्याऽभावेपि तदानीं

* अनावृतत्वमर्थविशेषणं त्यज्यतइति भावः ।

† प्रतिबिम्बान्तरत्वादिति २ पु॰ पाठः ।    ‡ विद्योदयेनेति २ । ३ पु॰ पाठः ।

बहुपुरुषान्तराविद्यासत्त्वात् * । न हीश्वरस्येश्वरत्वं सत्यकामत्वादिगुणविशिष्टत्वं च स्वाविद्याकृतं तस्य निरञ्जनत्वात् किं तु बहुपुरुषाविद्याकृतमेव तत्सर्वमैश्वर्यम् । न च यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति तं यथा यथोपासत इत्यादिश्रुतिषु सगुणोपासकानामपीश्वरसायुज्यश्रवणान्मुक्तेः सगुणविद्याफलाविशेषापत्तिः । सगुणोपासकानामखण्डसाक्षात्काराभावान्नाविद्यानिवृत्तिर्न वा तन्मूलाहंकाराद्वैविलयः आवरणानिवृत्तेर्नाखण्डानन्दस्फुरणं जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च † भोगमात्रसाम्यलिङ्गाच्चेत्यादि ‡ सूत्रोक्तन्यायेन तेषां परमेश्वरेण भोगसाम्ये ऽपि संकल्पमात्रात्स्वभोगोपयुक्तदिव्यदेहेन्द्रियवनितादिसृष्टिसामर्थ्येपि सकलजगत्सृष्टिसंहारादिस्वातन्त्र्यलक्षणं न निरवग्रहमैश्वर्यं मुक्तानां तु निःसंधिबन्धमीश्वरभावं प्राप्तानां तत्सर्वमिति महतो विशेषस्य संभवात् । न च परमेश्वरस्य रघुनाथाद्यवतारे तमस्वित्वदुःखसंसर्गादिश्रवणान्मुक्तानामीश्वरभावे पुनर्बन्धापत्तिः । तस्य विप्रशापामोघत्वादिस्वकृतमर्यादापरिपालनाय कथं चिद्भृगुशापादिसत्यत्वं प्रत्याययितुं नटवदीश्वरस्य तदभिनयमात्रपरत्वात् । अन्यथा तस्य नित्यमुक्तत्वनिरवग्रहस्वातन्त्र्यसमाभ्यधिकराहित्यादिश्रुतिविरोधात् । तस्माद्यावत्सर्वमुक्ति परमेश्वरभावो मुक्तस्येति बिम्बेश्वरभावे न कश्चिद्दोषः ॥

अयमेव पक्षः श्रुतिसूत्रभाष्याद्यनुगुणः । तथा हि समन्वयाध्याये तावद्दहर उत्तरेभ्य § इत्यधिकरणे अथ यदिदमस्मिन् ब्रह्मपुरे ‖ दहरं पुण्डरीकं वेश्म दहरोस्मिन्नन्तराकाश इत्यादिश्रुतिनिर्दिष्टो दहराकाशो न भूताकाशो नापि जीवः किं तु परमेश्वरः उत्तरेभ्यो वाक्यशेषेभ्य उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते यावान्वा अयमाकाशस्तावानेषोन्तर्हृदय आकाश एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सो विपिपासः ¶ सत्यकामः सत्यसङ्कल्प इत्यादिना प्रतिपाद्यमानेभ्यो द्यावापृथिव्याद्याधारत्वलक्षणगुणेभ्यो हेतुभ्य इति निर्णीय उत्तराच्चेदाविर्भूतस्वरूपस्त्वि ** तिसूत्रान्तरेण दहरविद्यानन्तरमिन्द्रप्रजापतिसंवादे य आत्मापहतपाप्मा इत्यादिनाऽपहतपाप्म-

* तथा चाविद्यकमेवैश्वर्यमित्युपगमात्परमार्थत एकरूपैव सदा मुक्तिरिति न तृतीयाध्यायान्तिमाधिकरणविरोधः ।

† व्या॰ सू॰ अ॰ ४ पा॰ ४ सू॰ १७ । ‡ व्या॰ सू॰ अ॰ ४ पा॰ ४ सू॰ २१ ।

§ व्या॰ सू॰ अ॰ १ पा॰ ३ सू॰ १४ । ‖ शरीरे इति ३ पु॰ पाठः ।

¶ विपाप इति ३ पु॰ पाठः । ** व्या॰ सू॰ अ॰ १ पा॰ ३ सू॰ १९ ।

त्वादिगुणाष्टकयुक्तमात्मानमुपदेश्यमुत्क्षिप्य य एषोक्षिणि पुरुषो दृश्यते एष आत्मेति जाग्रदवस्थायां द्रष्टृत्वेनाक्षिसन्निहितस्य य एष स्वप्ने महीयमानश्चरत्येष आत्मेति स्वप्नावस्थापन्नस्य तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्येष आत्मेति सुषुप्त्यवस्थापन्नस्य एष संप्रसादोस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष इत्यवस्थात्रयोत्तीर्णस्य च जीवस्योपदेशाज्जीवे ऽप्यस्त्यपहतपाप्मत्वादिगुणाष्टकमिति न दहराकाशस्य परमेश्वरत्वनिर्णायकं य एष सुप्त इत्यादिपर्यायेषु प्रतिपर्यायमेतं त्वेव ते भूयो ऽनुव्याख्यामीति श्रवणेन स्फुटस्वप्नादिजीवलिङ्गानां द्वितीयादिपर्यायाणामेव जीवविषयत्वं प्रथमपर्यायस्य ब्रह्मविषयत्वमिति चोद्यानवकाशादित्याशङ्क्य तत्र चतुर्थपर्याये निरूप्यमाणः सकलबन्धविमुक्तत्वेनाविर्भूतस्वरूपो जीवः प्रतिपाद्यः न तु सांसारिकावस्थाभेदकलुषितः तत्र सत्यसङ्कल्पत्वादिगुणबाधाद् अवस्थात्रयोपन्यासस्य तत्तदवस्थादोषाभिधानेन चतुर्थपर्यायोपदेशशेषत्वप्रतिपत्तेरिति समादधानः सूत्रकारश्चतुर्थपर्याये प्रतिपाद्यस्य मुक्तस्येश्वरभावापत्तिं स्पष्टमाह । तदभावे मुक्तेपि सत्यसङ्कल्पत्वाद्ययोगात् । अनुक्रान्तस्य गुणाष्टकस्येश्वरादन्यत्रापि भावे कृतशङ्कापरिहारालाभाच्च । तस्मिन्सूत्रे तस्मादविद्याप्रत्युपस्थापित * मपारमार्थिकं जैवं रूपं कर्तृत्वभोक्तृत्वरागद्वेषकलुषितमनेकानर्थयोगि तद्विलयनेन तद्विपरीतमपहतपाप्मत्वादिगुणकं पारमेश्वरं रूपं विद्यया प्रतिपद्यतइति भाष्यकारोपि अतिस्पष्टं मुक्तस्य सगुणेश्वरभावापत्तिमाह । अविरोधाध्यायेपि एष ह्येव साधु कर्म कारयति तं यमेभ्यो भूतेभ्य उन्निनीषते एष एवासाधु कर्म कारयति तं यमधो निनीषते इत्यादिश्रुतेस्तत्तत्कर्मकर्तृत्वेन तत्कर्मकारयितृत्वेन चोपकार्योपकारकभावेन चावगतयोर्जीवेश्वरयोरंशांशिभावरूपसंबन्धनिरूपणार्थत्वे † नावतारिते अंशो नानाव्यपदेशा ‡ दित्यधिकरणे जीवस्येश्वरांशत्वाभ्युपगमे तदीयेन संसारदुःखभोगेनेश्वरस्यापि दुःखित्वं स्याद् यथा लोके हस्तपादाद्यन्यतमांशगतेन दुःखेनांशिनो देवदत्तस्यापि दुःखित्वं तद्वत्तश्च तत्प्राप्तानां महत्तरं दुःखं प्राप्नुयाद् अतो वरं पूर्वावस्था संसार एवास्त्विति सम्यग्ज्ञानानर्थक्यप्रसङ्ग इति शङ्काग्रन्थेन भामत्यादिषु स्पष्टीकृतं बिम्बप्रतिबिम्बभावकृतासंकरमु-

* अविद्याप्रत्युपस्थापितमिति ३ पु० पाठः । † संबन्धार्थत्वेनेति ३ पु० पाठः ।
‡ ब्र० सू० अ० २ पा० ३ सू० ४३ ।

पादाय समाहितेन भाष्यकारो मुक्तस्येश्वरभावापत्तिं स्पष्टीचकार । साधनाध्यायेपि संध्ये सृष्टिरा * हीत्यधिकरणे स्वप्नप्रपञ्चस्य मिथ्यात्वे व्यवस्थिते तत्र मिथ्याभूते स्वप्नप्रपञ्चे जीवस्य कर्तृत्वमाशङ्क्य पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ † वितिसूत्रेण जीवस्येश्वराभिन्नत्वात्सदपि सत्यसङ्कल्पत्वादिकमविद्यादोषात्तिरोहितमिति न तस्य स्वप्नप्रपञ्चे स्रष्टृत्वं संभवतीति वदन्सूत्रकारस्तत्पुनस्तिरोहितं सत्परमभिध्यायतो यतमानस्य जन्तोर्विधूतध्वान्तस्य तिमिरतिरस्कृतेव दृक्शक्तिरौषधवीर्यादीश्वरप्रसादात्संसिद्धस्य कस्यचिदेवाविर्भवति न स्वभावत एव सर्वेषां जन्तूनामिति तत्सूत्राभिप्रायं वर्णयन्भाष्यकारश्च मुक्तस्य स्वप्नसृष्ट्याद्युपयोगिसत्यसङ्कल्पत्वाद्यभिव्यक्त्यङ्गीकारेण परमेश्वरभावापत्तिं स्फुटीचकार । फलाध्यायेपि स्वेन रूपेणाभिनिष्पद्यतइति मुच्यमानविषयायां श्रुतौ केन रूपेणाभिनिष्पत्तिर्विवक्षितेति बुभुत्सायां ब्राह्मेण जैमिनिरुपन्यासादिभ्य ‡ इति सूत्रेण यद् ब्राह्मं रूपमपहतपाप्मत्वादि सत्यसङ्कल्पत्वाद्यवसानं सर्वज्ञत्वसर्वेश्वरत्वादि च तेनाभिनिष्पत्तिर्य आत्माऽपहतपाप्मेत्याद्युपन्यासेन स तत्र पर्येति जक्षत्क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वेत्याद्यैश्वर्यावेदनेन चेति जैमिनिमतं चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिरित्यनन्तरसूत्रेण § एवं वा अरेयमात्मा अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवेत्यादिश्रुत्या चैतन्यमात्रमात्मस्वरूपमित्यवगतेस्तन्मात्रेणाभिनिष्पत्तिरिति मतान्तरं चोपन्यस्य एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायण ‖ इति सिद्धान्तसूत्रेण वस्तुदृष्ट्या चैतन्यमात्रत्वेपि पूर्वोक्तगुणकलापस्योपन्यासाद्यवगतस्य मायामयस्य बद्धपुरुषव्यवहारदृष्ट्या संभवान्न श्रुतिद्वयविरोध इति अविरोधं वदन्सूत्रकारः सूत्रत्रयमिदमुक्तार्थपरत्वेन व्याकुर्वन् भाष्यकारश्च मुक्तस्येश्वरभावापत्तिं स्पष्टमनुमेने । भामतीनिबन्धप्रभृतयश्च श्रुत्युपबृंहितमिदं सूत्रजातं भगवतो भाष्यकारस्योदाहृतं वचनजातं च तथैवान्ववर्त्तन्त । न च श्रुत्युपबृंहितस्यैतावतः सूत्रभाष्यवचनजातस्यैश्वर्यमज्ञानतिरोहितं सद्ध्यानादभिव्यज्यतइत्यवोचत् शारीरिणः सूत्रकृदस्य यत्तु तदभ्युपेत्योदितमुक्तहेतोरिति संक्षेपशारीरकोक्तरीत्याभ्युपेत्यवादत्वं युक्तं वक्तुम् । तस्मान्मुक्ता-

* व्या॰ सू॰ अ॰ ३ पा॰ २ सू॰ १ ।
† व्या॰ सू॰ अ॰ ३ पा॰ २ सू॰ ५ ।
‡ व्या॰ सू॰ अ॰ ४ पा॰ ४ सू॰ ५ ।
§ व्या॰ सू॰ अ॰ ४ पा॰ ४ सू॰ ६ ।
‖ व्या॰ सू॰ अ॰ ४ पा॰ ४ सू॰ ७ ।

नामीश्वरभावापत्तेरवश्याभ्युपेयत्वादेतदसंभव एव प्रतिबिम्बेश्वरवादे दोषः । तदाहुः कल्पतरुकाराः । न मायाप्रतिबिम्बस्य विमुक्तेरूपसृप्यतेति । एत * दसंभवश्चैकजीववादपारमार्थिकजीवभेदवादयोरपि दोषः । यत्तु कैश्चिद् द्वैतिभिरुच्यते भेदस्य पारमार्थिकत्वेन मुक्तौ जीवस्येश्वरभावाभावेपि तथापीश्वरइव पृथगपहतपाप्मत्वादिगुणसंभवादविरोध इति । तत्तुच्छम् । तथा सति जीवस्याप्यपहतपाप्मत्वादिकमस्तीति न तस्य ब्रह्मलिङ्गत्वमिति शङ्कापरिहारालाभेन उत्तराच्चेदाविर्भूतस्वरूपस्त्वितिसूत्रविरोधात् । ब्राह्मेण जैमिनिरिति सूत्रे जीवगतस्यापहतपाप्मत्वादेरुपन्यासादिभ्य इत्यत्रादिशब्दार्थत्वेन परेषामप्यभिमतस्य जक्षत् क्रीडन् रममाण इत्यादिश्रुत्युदितस्य जक्षणादेश्च ब्राह्मत्वनिर्देशविरोधाच्च । भेदे तेषां गुणानां सत्यत्वेन चितिमात्रेणेति सूत्रोक्तस्य मुक्तजीवानां चैतन्यमात्रत्वस्य एवमपीति सिद्धान्तसूत्रे ऽङ्गीकारविरोधाच्च । संपद्याविर्भाव इत्यधिकरणविरोधाच्च । तत्र हि स्वेन रूपेणाभिनिष्पद्यतइति श्रुतावागन्तुना केन चिद्रूपेणाभिनिष्पत्तिर्नोच्यते स्वेनशब्दवैयर्थ्यापत्तेः । येन रूपेणागन्तुना स्वयमभिनिष्पद्यते तस्यात्मीयत्वस्यावक्तव्यत्वात् तस्मादात्मवाचिस्वशब्दोपादानान्नित्यसिद्धेन स्वरूपेणैवाभिनिष्पत्तिर्विवक्षिता न तु केन चिद्धर्मेणेति व्यवस्थापितम् । किं चेदमपहतपाप्मत्वादि जीवस्य मुक्तावागन्तुकं चेत् संपद्याविर्भाव इति मुक्तावागन्तुकरूपनिषेधेन पराभिध्यानात्तु तिरोहितमुत्तराच्चेदाविर्भूतस्वरूपस्त्वित्यपहतपाप्मत्वादेर्बन्धमुक्त्योस्तिरोभावाविर्भावप्रतिपादनेन च विरोधः स्यादिति नित्यसिद्धं वाच्यमिति बन्धस्य मिथ्यात्वं दुर्वारं नित्यसिद्धमपहतपाप्मत्वं हि सर्वदा पापरहितत्वं न च वस्तुतः सर्वदा पाप्मरहिते पाप्मसम्बन्धस्तन्मूलककर्तृत्वभोक्तृत्वसंम्बन्धो वा पारमार्थिकः संभवति । एवं च जीवस्येश्वराभेदोपि दुर्वारः श्रुतिबोध्यतदभेदविरोधिबन्धस्य सत्यत्वाभावात् । अन्यथा संसारिणि नित्यसिद्धसत्यसंकल्पतिरोधानोक्त्ययोगाच्च । न हि जीवस्य संसारदशायामप्यनुवर्तमानो यत्किंचिदर्थगोचरः कश्चिदस्त्यवितथसंकल्पस्तिरोहित इति परैरपीष्यते किं त्वीश्वरस्य यन् नित्यसिद्धं निरवग्रहं सत्यसंकल्पत्वं तदेव जीवस्य संसारदशायामीश्वराभेदानभिव्यक्त्या स्वकीयत्वेनानवभासमानं तं प्रति तिरोहितमि-

* मुक्तस्येश्वरभावापत्तिरेतच्छब्दार्थः । टी॰

त्येव समर्थनीयमिति घट्टकुटीप्रभातवृत्तान्तः । नन्वपहतपाप्मत्वं न पाप्मविरहः किं तु पाप्महेतुकर्माचरणेपि पापोत्पत्तिप्रतिबन्धकशक्तियोगित्वमिति न तस्य नित्यसिद्धत्वेन बन्धस्य मिथ्यात्वप्रसङ्गः । एवं सत्यसंकल्पत्वमपि शक्तिरूपेण निर्वाच्यमिति नेश्वराभेदप्रसङ्ग इति चेद् मैवम् । एवं शब्दार्थकल्पने प्रमाणाभावात् । न हि पापजननप्रतिबन्धिका शक्तिः संसारपरिभ्रमणदशायां पापानुत्पत्त्यर्थं कल्पनीया तदानीं तदुत्पत्तेरिष्टत्वात् । विद्योदयप्रभृति तु विद्यामाहात्म्यादेवाश्लेषः तदधिगमे उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् * दिति सूत्रेण दर्शितः तत एव मुक्तावप्यश्लेष उपपद्यतइति व्यर्था शक्तिकल्पना । तस्मादुदाहृतश्रुतिसूत्रानुसारिभिर्मुक्तजीवानां यावत्सर्वमुक्ति वस्तुसच्चैतन्यमात्रत्वाविरोधिबद्धपुरुषाविद्याकृतनिरवग्रहैश्वर्यतदनुगुणगुणकलापविशिष्टनिरतिशयानन्दस्फुरणसमृद्धनिःसंधिबन्धपरमेश्वरभावापत्तिरादर्तव्येति सिद्धम् ॥

विद्वद्गुरोर्विहितविश्वजिदध्वरस्य
श्रीसर्वतोमुखमहाव्रतयाजिसूनोः ।
श्रीरङ्गराजमखिनः श्रितचन्द्रमौलि †-
रस्त्यप्पदीक्षित इति प्रथितस्तनूजः ॥ १ ॥
तन्त्राण्यधीत्य सकलानि सदावदात-
व्याख्यानकौशलकलाविशदीकृतानि ।
आस्थाय मूल ‡ मनुरुध्य च संप्रदायं
सिद्धान्तभेदलवसंग्रहमित्यकार्षीत् § ॥ २ ॥

## इति शास्त्रसिद्धान्तलवसंग्रहे चतुर्थः परिच्छेदः संपूर्णः ॥

## समाप्तश्चायं ग्रन्थः ॥

---

* व्या· सू· अ· ४ पा· १ सू· १३ ।

† श्रितचन्द्रमौलेरिति २ । ३ पु· पाठः ।

‡ आम्नायमूलमिति २ पु· पाठः ।

§ सिद्धान्तरीतिषु मया भ्रमदूषितेन स्यादन्यथापि लिखितं यदि किं चिदस्य । संशोधने सहृदयाः सदया भवन्तु सत्संप्रदायपरिशीलननिर्विशङ्काः । इति २ । ३ पु· अधिकः श्लोकः ।

॥ श्रीः ॥

# भक्तिमीमांसा।



श्रीशाण्डिल्यऋषिप्रणीता

पदवाक्यप्रमाणपारावारीणमहामहोपाध्याय-

आचार्यस्वप्नेश्वरविरचितेन भाष्येण संयुता।

सेयम्

श्रीकृष्णदासात्मज गङ्गाविष्णु, खेमराजाभ्यां

मुम्बय्यां

स्वकीये

श्रीवेङ्कटेश्वरमुद्रायन्त्रे

अङ्किता।

शाके १८०९ संवत् १९४४

## ☞ प्रसिद्धपत्र

सर्व जनो को विदित होवे कि हमारे श्रीवेंकटेश्वरछापेखानेमे शाङ्करभाष्य और रत्नप्रभाटीका टिप्पणीसहित ब्रह्मसूत्र छपकर तयार है श्रीमहर्षि वेदव्यासप्रणीत होने से हमकोइसकी विशेष समालोचना करना कुछ आवश्यकनहीं हैं परंतु इतना लिखते है कि अद्यावधि पर्यंत ऐसे मोटे कागद और मोटे अक्षरोमें यहग्रंथ किसीने नहीं छापा इसग्रंथके अन्तमें निर्घण्टु और अधिकरणमालाभी संयुक्त करीगइ है और सर्व साधारणोंके सुवीतेके लिये मूल्यभी अति सुगम केवल १० रुपये डाकमासूलसहित रक्खा है

श्रीमद्भागवत श्रीधरीटीकासहित जिसके प्रथम १२ रुपये हे अब इसकी किंमत ८ रुपये हैं टपाल मासूल १॥ रुपया.

वाल्मीकि रामायण सटीक नवा छपेला किंमत १० रुपये टपाल महासूल १॥ रुपया.

सिद्धान्तकौमुदी मोटाअक्षर चिल्द बांधेला किंमत ४ रुपये टपाल मासूल माफहै.

और जिनकूं विशेष पुस्तक खरीद करना मंजूर होय उनको आधानाका टिकट भेजनेसे सूचिपत्र भेजदियाजायगा.

इसके लेनेवालेग्राहक गणोंको अपना नाम गाम जिला आदि स्पष्ट देवनागरीअक्षरोमें इसपत्तेपर लिखे ।

श्रीयुत गंगाविष्णु श्रीकृष्णदास

"श्रीवेंकटेश्वर" छापखाना (मुंबई.)

## शाण्डिल्यशतसूत्रीयं भाष्यम् ॥

परमेश्वरो जयति ॥

प्रपद्य परमं देवं श्रीस्वप्नेश्वरसूरिणा ।
शाण्डिल्यशतसूत्रीयं भाष्यमाभाष्यतेऽधुना ॥ १ ॥
गोविन्दचरणद्वन्द्वमधुनो महदद्भुतम् ।
यत्पायिनो न मुह्यन्ति मुह्यन्ति यदपायिनः ॥ २ ॥

जीवानां ब्रह्मभावापत्तिर्मुक्तिरिति वक्ष्यते जीवाश्च ब्रह्मणोऽत्यन्तमभिन्ना इति तेषां संसारस्त्रिगुणात्मकान्तःकरणोपाधिकृतो न साहजिकः स्फटिकस्यैव जपादिसन्निधिकृतं लौहित्यादिकं स चौपाधिकत्वादेव न ज्ञानेन निवर्तनीयः किन्तूपाध्युपधेययोरन्यतरहानेन तत्सम्बन्धहानेन वा नहि निपुणतरदर्शनेनाप्युपाधियोगे स्फटिकलौहित्यभ्रमनिवृत्तिरस्ति तथेह न सर्वसत्तास्फुरणात्मनो हानिः सम्भवति न वा सम्बन्धस्य तस्य तदुभयस्वरूपानतिरेकात् परिशेषादुपाधिहानादेव भ्रमनिवृत्तिर्नात्मज्ञानात् उपाधिहाने च कारणान्तरमन्वेष्टव्यं तं चेश्वरभक्तिरेवालौकिकत्वाच्छ्रुतिस्मृतिसिद्धा । तथा ( गी० । अ० १४ । श्लो० ६ ) ।

तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥
रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥
तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥

इत्युपक्रम्य ।

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।

स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥

इत्युपसंहरन् भगवानेवात्मभक्तेस्त्रिगुणात्मकान्तःकरणलयपूर्वब्रह्मानन्दावाप्तिलक्षणमुक्तिहेतुतामाह। न चात्मज्ञानवैयर्थ्यम् अश्रद्धामलक्षालनेन भक्तावुपयोगात् नत्वपरोक्षान्तःकरणरूपोपाधिधर्माध्यासनिरासनसमर्थं ज्ञानम् अत एव (गी० । अ० १४ । श्लो० १९) गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छतीति ( गी० ।अ० १४ श्लो० ४१ ) ज्ञानसञ्छिन्नसंशयामित्यादावयमर्थः स्फुट एव न चाज्ञानकृतः संसारो येन ज्ञानान्निवृत्तिरपि वक्तुं शक्या प्रमाणाभावरत् रजतावयवादेः कारणस्याभावादज्ञातशुक्तित उत्पत्त्यसम्भवाच्च । अपि च ( छान्दो० ) 'कुतस्तु खलु सौम्यैवं स्यादसतः सज्जायेते'ति श्रुतिः कार्यसत्तया कारणसत्तां बोधयन्ती संसारस्य सत्यत्वमेवाह । नितराञ्च ( छान्दो० । ) सत्यसंकल्प इत्यादिना परमेश्वरसर्गस्य । नापि भगवान् बादरायणः क्वचिदपि सूत्रे संसारस्याज्ञानकल्पितत्वमुक्तवान् प्रत्युत स्वप्नसृष्टिनिराकरणेन जाग्रत्सृष्टेः सत्यत्वम्। न च दृष्टान्तार्थं तत् मानाभावात्। सुखादिधर्माणां तु साहजिकत्वं नोपपद्यते सुखादयो न साक्षादात्मविकारा आत्मनि प्रतीयमानत्वाद्गौरत्वादिवत्। सुखाद्युपलब्धिः सकरणिका क्रियात्वादित्यत्र लाघवात् समवायेनैव करणजन्यत्वं युज्यते श्रोत्रजन्यत्वमिव शब्दस्य। सुखादयः करणसमवेताः अनादीन्द्रियग्राह्यगुणत्वात् शब्दवदिति परमते। उभयमते स्पर्शशून्येन्द्रियग्राह्यगुणत्वात् । आत्मसिद्धिस्तु सर्वसत्ताप्रकाशकतयेति सर्वमेतद्द्वितीये तृतीये स्फुटीभविष्यति । तस्मात् पुरुषार्थहेतुत्वाद्धर्मस्येव भक्तेर्मीमांसाविवित्सयेदं सूत्रम्।

## अथातो भक्तिजिज्ञासा ॥ १ ॥

अथेत्यधिकारार्थो नानन्तर्यार्थः। आनन्तर्यं हि न स्वाध्यायाध्ययनस्य आनिन्त्ययोन्यधिकृतेर्वक्ष्यमाणत्वात्। नापि शमादिसम्पत्त्यर्थः

मुमुक्षामात्रस्य भक्त्यधिकारत्वात्। यथा मन्त्रवर्णः ( श्वेता० )।

यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै।

तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये॥ इति।

न च मङ्गलार्थोऽपि तदुच्चारणमात्रस्य मङ्गलत्वात्। तथा च मुमुक्षुणा भक्तिविचारः कर्तव्य इत्यर्थः। जिज्ञासया विचार आक्षिप्यते। यद्यपि परमेश्वरानुरक्तिरूपाया भक्तेर्न धर्मवत् कृतिसाध्यत्वं न वा ब्रह्मवज्ज्ञेयत्वं तथापि तस्याः स्वकारणपूर्वसुकृतैहिकगौणभक्त्यादिसंपन्नाया अपि नेयं भक्तिः नेयं निःश्रेयसार्था नेयमुत्तमविषयेत्यादिकुतर्कबलेन निवृत्तिरपि भवति यथा पत्यौ पत्न्याः। तन्निरासमुखेनैव तन्मीमांसाया भक्तावुपयोग इति अतःशब्देनोच्यते। यतः कुतर्कनिरासोऽपेक्षणीयः अतस्तज्जिज्ञासेति। अत एव, ( विष्णुपु०। अंशे १। अ० २० श्लो० १६।

नाथ योनिसहस्रेषु येषुयेषु व्रजाम्यहम्।

तेषुतेष्वचला भक्तिरच्युतास्तु सदा त्वयीति॥

तदविच्युतिप्रार्थनमपेक्षितत्वादिति अत एव च फलवद्भक्त्यङ्गमपि विचारः फलवानेवेति॥ १॥

अथ तस्या लौकिकाकारतामन्तरेण बुद्ध्यनारोहान्न विचारविषयत्वमतस्तल्लक्षणमुच्यते।

## सा परानुरक्तिरीश्वरे॥ २॥

अत्र सा परेति लक्ष्यनिर्देशः। शेषं लक्षणम्। परेति गौणीं व्यावर्तयति। ईश्वर इति प्रकृताभिप्रायम्। आराध्यविषयकरागत्वमेव सा। इह तु परमेश्वरविषयकान्तःकरणवृत्तिविशेष एव भक्तिस्तद्वैशेष्यं च लौकिकानुरागादौ सुग्रहम्। यथोक्तं परभक्तिमता प्रह्लादेन। विष्णुपु०। अंशे १। अ० २०। श्लो० १७ )।

या प्रीतिरविवेकानां विषयेष्वनपायिनी।

त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु ॥

अत्र प्रीतिपदेन सुखनियतो राग एव लक्षितः अन्यथा प्रीतेः सुखरूपाया निर्विषयत्वेन विषयसप्तमी न स्यात् तस्याः सुखज्ञानरूपत्वेऽपि तज्ज्ञानस्य सुखविषयत्वाद्विषयविषयत्वासम्भवात्। तस्मादनुरक्तिरेव सविषयिणी लक्षिता। न च विषयजन्यप्रीतिरर्थः जनकसप्तम्या अननुशासनात्। किञ्च 'अच्युतास्तु सदा त्वयी'त्यत्र भक्तेरीश्वरविषयतासिद्धौ प्रीतिपदेनापि तदेकवाक्यतया सैवोच्यते। पूर्वं प्रतिजन्म भक्तिप्रार्थनमिह तु विषयरागदृष्टान्तेन तस्या एव सर्वथाप्यपरिहार्यत्वप्रार्थनमिति विशेषः। विषयजन्यप्रीतिरपि रागं विना न सम्भवतीति रागावश्यकत्वम्। तथा च पातञ्जलसूत्रम्। (पा.२।सू.७) 'सुखानुशयी राग' इति। तस्यैव वक्ष्यमाणलिङ्गेषु व्यापनाल्लाघवाच्च भक्तित्वम्। न तु क्वचित् स्मरणस्य। क्वचित् कीर्तनादेः। अननुगमात्। न च तज्ज्ञानस्य तत्त्वं द्वेषादिमत्स्वपि तत्प्रसङ्गात्। नाप्याराध्यत्वेन ज्ञानं सा पूजानमस्काराद्याराधनास्वननुगमात्। अपि च बलाद्भयाद्वा नमस्कार्यत्वादिज्ञानवत्यपि भक्तोऽयमनुरक्तोऽयमिति व्यवहारापत्तेः अनुरागादिसहिताराध्यत्वज्ञानमिति चेत् अनुराग एवास्तु अत एव (गी.। अ.१०। श्लो.९।)

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च॥
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥ २॥

इत्यादौ तद्गतचित्तप्राणादीनां भजनमुक्तं नाराध्यत्वेन ज्ञानवतामेव। अत एव च कृष्णस्य कमनीयाकृतिदर्शनेनानुरक्तानां गोपतरुणीनामपि भक्तिफलं मुक्तिः स्मर्यते। अनुस्तु न लक्षणान्तर्गतः किन्तु भगवन्महिमादिज्ञानादनु पश्चाज्जायमानत्वादनुरक्तिरित्युक्तम्

ननु पित्रादिगोचरानुरागस्यापि प्रकृतभक्तित्वं प्रसज्येत जगत एव परमेश्वरात्मत्वात् । अथ विकाराविशिष्ट एव तथात्वं वाच्यं तथापि गोपीप्रभृतीनां प्रादुर्भावावच्छिन्नेश्वरभक्तावव्यापकम् । उच्यते जीवोपाध्यनवच्छिन्नचेतनविषयिणी अनुरक्तिरेव सेति । एवञ्च प्रादुर्भावावच्छिन्ने परिपूर्णे च रक्तिः संगृहीता भवति ॥ २ ॥

## तत्संस्थस्यामृतत्वोपदेशात् ॥ ३ ॥

तस्मिन्नीश्वरे संस्था भक्तिर्यस्य स तथोक्तः । तस्यामृतत्वं फलमुपदिश्यते ( छां० । ) ब्रह्मसंस्थोऽमृतत्वमेतीति तस्मान्निष्फलत्वगौणफलत्वनिबन्धना तदजिज्ञासा परिहृता भवतीति ॥ ३ ॥

## ज्ञानमिति चेन्न द्विषतोऽपि ज्ञानस्य तदसंस्थितेः ॥ ४ ॥

ननु ब्रह्मसंस्थाशब्देन ब्रह्मज्ञानमेवोच्यते न तु तद्भक्तिः । तथा चामृतत्वफलं तस्यैवेति चेद्ब्रूषे । नैष दोषः । संस्था भक्तिरेव न ज्ञानं द्विषतस्तज्ज्ञानवतोऽपि तत्संस्थत्वव्यवहाराभावात् । राजाद्यनुरक्ताः खल्वमात्यमित्रादयस्तत्संस्था इति व्यपदिश्यन्ते न पुनः प्रतिपक्षभूपालाः । शब्दार्थनिर्णयो हि लोकवदेव वेदेऽपीति । अतएव चिरकालिकोपाख्याने [ महाभार० । शा० । अ० २६७ ।

विमृश्यते न कालेन पत्नीसंस्थाव्यतिक्रमः ।
सोऽब्रवीच्च भृशं तप्तो दुःखेनाश्रूणि वर्तयन् ॥

इत्यनेन पतिभक्त्यतिक्रम उक्तः । तस्मात् संस्था भक्तिरिति । एवञ्च[ब्रह्मसू० । अ० १ पा० १ सू० ७ ] 'तन्निष्ठस्य मोक्षोपदेशा'दिति बादरायणीयसूत्रस्याप्ययमेवार्थोऽध्यवसेय इति ॥ ४ ॥

## तयोपक्षयाच्च ॥ ५ ॥

तया भक्त्या मुक्तिं प्रति ज्ञानमुपक्षीणं यस्माच्चकार उक्तयुक्तिसमुच्चयार्थः [ गी० । अ० ७ श्लो० १२ ] ।

देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि ।

इत्यादि तथा प्रह्लादं प्रति भगवद्वाक्यं । ( विष्णुपु० । अंशे १ । अ० २० श्लो० २१ ) ।

यथा ते निश्चलं चेतो मयि भक्तिसमन्वितम् ।
तथा त्वं मत्प्रसादेन निर्वाणमपि यास्यसि ॥

इति स्थितम् । ननु ( श्वेताश्व० । ) तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेत्यत्र वेदनफलं मुक्तिः श्रुता तद्विरोधेन स्मृतीनामन्यार्थत्वं स्यादिति चेन्न अत्रापि तथैवोपक्षयात् । तथा हि अतिमृत्युपदं न मुक्तौ रूढं किन्तु यस्यां सत्यां मृत्योरतिक्रम इति व्युत्पत्त्या तदपेक्षया यतो भक्तेर्मृत्य्वतिक्रम इति व्युत्पाद्य भक्तिमेवातिमृत्युपदेनाभिधत्ताम् उपपदविभक्त्यर्थापेक्षया कारकविभक्त्यर्थस्य बलवत्त्वात् । ( गी० । अ० १२ । श्लो० ७ ) ।

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात् पार्थ मय्यावेशितचेतसाम् ॥

इत्यादिना भक्तितो मृत्य्वतिक्रमप्राप्तेः । मन्त्रश्च भवति ( तैत्तिरीयमन्त्रभागे ) 'त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृता'दिति । अत्र यजनं भक्तिः तथैव तत्कल्पव्याख्यानात् । न चास्यां श्रुतौ भक्तेरसन्निधानं मुक्तावपि तुल्यत्वात् । तस्मादनपायिश्रुत्या ज्ञानस्योपक्षय एव प्रतीयत इति ॥ ५ ॥

ननु तथापि भक्ते रागरूपत्वे किं कारणमित्यपेक्षायामाह ।

## द्वेषप्रतिपक्षभावाद्रसशब्दाच्च रागः ॥ ६ ॥

भक्तिः खलु राग एव भवितुमर्हति कुतः द्वेषविरोधित्वात् । लोके हि द्वेष्टायं भक्तोऽयमिति मिथो विरुद्धधर्मवति व्यवह्रियते तत्र द्वेषविरोधी च राग एव प्रसिद्धो न ज्ञानादिः । एवं च वैष्णवे भगवति शिशुपालस्य द्वेषानुबन्धमभिधाय (विष्णुपु० अं० ४ अ० १५ गद्यम् १०)

'अयं हि भगवान् कीर्तितः संस्मृतश्च द्वेषानुबन्धेनापि अखिलसुरासुर-दुर्लभं फलं प्रयच्छति किमुत सम्यग्भक्तिमतामि'त्युक्तम् । तथा चाग्नि-स्मृतौ ।

विद्वेषादपि गोविन्दं दमघोषात्मजः स्मरन् ।
शिशुपालो गतः स्वर्गं किं पुनस्तत्परायणः ॥ इति ।

तत्रापि द्वेषविरोधित्वेन भक्तेरभिधानात् । तथा च गीतासु [ अ० १६ श्लो० १८ ) ।

मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ।
तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ॥
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ।
आसुरीं योनिमापन्ना मूढा जन्मनिजन्मनि ॥
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् । इति ।

तद्विरोधिनी च भक्तिरीश्वरविषयैवानुरक्तिरिति युज्यते । किञ्च ( तैत्ति० ) । 'रसं ह्येवायं लब्ध्वानन्दीभवती'ति शब्दाद् ब्रह्मानन्दाविर्भावमुक्तेर्ब्रह्मगोचररस्य रसस्य हेतुतावगम्यते । रसश्च रागः ( गी० । अ० २ । श्लो० ५९ ) ।

रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्त्तते ।

इत्यादौ प्रसिद्धः । अत्र रसो विषयरागः । अत एव च रामलक्ष्मणादीनां स्वर्लोकारोहणमुक्त्वा ( विष्णुपु० अं० ४ । अ० ४ । गद्यम् ४ । ) 'येऽपि तेषु भगवदंशेष्वनुरागिणः कोशलनगरजानपदास्तेऽपि तन्मनसस्तत्सलोकतामापु'रिति साक्षादेव भक्तावनुरागशब्दः प्रयुक्त' इति । तस्मादपि न ज्ञानं किन्त्वनुरागरूपैव भक्तिर्निःश्रेयसफलेति । ननु द्वेषविरोधित्वं न रागत्वे लिङ्गम् उदासीनत्वेनानैकान्त्यादिति चेत् । उच्यते द्वेषकार्यं निवृत्तिस्तद्विरोधिनी प्रवृत्तिरिति । भवति च भक्तानां भजनीयानुवर्तनादौ प्रवृत्तिस्तद्विरोधिनां तदनुवर्त्तना

दौ निवृत्तिः एवञ्च कार्यमुखेन विरोधमभिप्रेत्य द्वेषविपक्षेत्युक्तम् । तथा च प्रयोक्तव्यं भक्तिर्भजनीयगोचररागरूपा तदनुवर्तनादिहेतुहितसाधनताधीभिन्नात्मविशेषगुणत्वात् यन्नैवं तन्नैवं यथा द्वेषः । रागोत्कर्षेण तदनुवर्तनाद्युत्कर्षस्य दृष्टत्वाच्च । किं च यो यस्मिन् भक्तस्तत्र तस्यौदासीन्याभावेऽगते भक्तिस्तादृशानुवर्तनाद्यनुकूलद्वेषविरोधिगुणरूपा अनुवर्तनहेत्वात्मविशेषगुणत्वाद्धितसाधनताधीवदिति हितसाधनताधीत्वबाधसहकारेण परिशेषाद्रागत्वसिद्धिः । किमुत भक्तिमतामित्येतत्कैमुतिकन्यायो विरोधिन्येव द्रष्टव्यः । ( गी० । अ० ९ । श्लो० ३२ । )

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।

किं पुनर्ब्राह्मणाः पुण्या इत्यादौ च । एवं ( गी० । अ० १६ । श्लो० १८ ) मामात्मपरदेहेष्वित्यनेन द्वेषस्य संसारहेतुत्वात् तद्विरोधिगुणो जीवोपाधिपरिहारेण परात्मगोचरो राग एव भक्तिरूपः संसारनाशहेतुः । एतदेवोक्तं मामप्राप्यैवेति । चकारात् पुलकादिरागलिङ्गैर्नापि रागत्वम् । प्रसिद्धं हि 'पुलकाञ्चितेन कथयति मय्यनुरागं कपोलेन' इत्यादौ । भक्तेर्गुणान्तरत्वे तु पृथग्लिङ्गताकल्पने गौरवात् । स च रागः केषांचिदिष्टसाधनताज्ञानजन्योऽपि यागादिवदिच्छारूप एव । अस्माकं तु प्रीणाम्यनुरज्यामि नेच्छामीत्यादिप्रतीते रागः पृथगेव द्वेषवत् । इच्छाया असिद्धमात्रविषयत्वाद्रागस्य सिद्धासिद्धविषयत्वाच्च । प्रत्युत तस्यैच्छात्वादिव्याप्यत्वकल्पनागौरवाच्चेति दिक् । तस्मान्न तल्लक्षणासिद्धिरिति ॥ ६ ॥

ननु भक्तिः क्रियात्मिका सा च निःश्रेयसाय न क्षमते ( तैत्ति० । आरण्य० । खिलप्रश्ने ऋक् २१ ) 'न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः' इत्यादिश्रुतिभ्य इत्याशङ्कां परिहरन्नाह ।

न क्रिया कृत्यनपेक्षणाज्ज्ञानवत् ॥ ७ ॥

सा भक्तिर्न क्रियात्मिका भवितुमर्हति प्रयत्नानुविधानाभावात् । यन्न प्रयत्नानुविधायि तन्न क्रियात्मकं यथा ज्ञानम् । तद्धि प्रमाणसम्पत्त्यधीनं न पुरुषेण स्वेच्छया कर्त्तुमकर्त्तुमन्यथाकर्त्तुं शक्यते । तथा भक्तिरपि । नहि रागिणां प्रमदापुत्रादिविषयिणी पुंव्यापारेण तथा तथा भवति भक्तिः किन्तु पूर्वसुकृतगौणभक्त्यादिसाधनाधीनेति ॥ ७ ॥

अत एव फलानन्त्यम् ॥ ८ ॥

यतः सा न क्रियात्मिका अत एव तत्फलस्य निःश्रेयसस्यानन्तत्वमुपपद्यते । अन्यथा (छां०) 'तद्यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षयिते' इत्यनेनामृतत्वस्यापि क्षयित्वं प्रसज्येतेति ८

तद्वतः प्रपत्तिशब्दाच्च न ज्ञानमितरप्रपत्तिवत् ॥ ९ ॥

भवति हि भगवद्वाक्यं ( गी० । अ० ७ । श्लो० १९ ) ।

बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥

इति ज्ञानवतः प्रपत्तिरुक्ता । भक्तेर्ज्ञानहेतुत्वे नेदमुपपद्यते इतरप्रपत्तिवदिति । यथा तदनन्तरं ( गी० । अ० ७ । श्लो० २० ) ।

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।

इत्यनेन देवतान्तरप्रपत्तिनिन्दामुखेनैव प्रपत्तिः स्तूयते । तत्र देवताभक्तेरेव प्रपत्तिशब्देन कथनं न तज्ज्ञानस्य । तस्या एव प्रपत्तेरुभयत्र प्रत्यभिज्ञानात् इति । चकाराज्ज्ञानानन्तर्य्यश्रवणमपि ज्ञानत्वाभावे निदानम् । यथा ( गी० । अ० १५ । श्लो० १९ ) ।

यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥ इति ।

तथा ( गी० । अ० ९ । श्लो० १३ ) ।

भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ।

इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥

इति च । तस्मान्न ज्ञानात्मिका । यद्यपि रागत्वेनैव ज्ञानभेदः सिद्धस्तथापि भक्तिशब्दो ब्रह्मज्ञाने गौण इति शङ्कानिरासार्थमेतत् । इदं तु चिन्त्यते भगवद्गीतावाक्यानि न शब्दविधया वेदवत् प्रमाणम् । किन्तु भारते स्मृतित्वेन । तथा च कथं शब्दादिति निर्देशः । अत्रैकेऽनुमितशब्दादिति व्याचक्षते । अत्रोच्यते अदृष्टार्थकभगवद्वाक्यत्वमेव वेदत्वं तच्च गीतास्वप्यविशिष्टम् । अत एव भगवद्गीतासूपनिषत्स्विति दृश्यते । केवलं त एव श्लोका व्यासेन निबद्धाः । तथा च पुराणान्तरम् ।

गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः ।

या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता ॥

न च शूद्राणामश्रवणप्रसङ्गः भारतश्रवणाभ्यनुज्ञानेनैव तदुपपत्तेः प्रणवादिस्तुत्यादिवत् । तद्विहायेति चेन्न लक्षताऽपरिपूर्त्तेः । तथा चोक्तमाचार्यैः

तानेव वैदिकान् मन्त्रान् भारतादिनिवेशितान् ।

स्वाध्यायनियमं हित्वा लोकबुद्ध्या प्रयुञ्जते ॥ इति ॥ ९ ॥

इत्याचार्यस्वप्नेश्वरविद्वद्विरचिते शाण्डिल्यशतसूत्रीयभाष्ये प्रथमाध्यायस्य प्रथममाह्निकम् ॥ १ ॥

---

एवममृतत्वं प्रत्यनन्यथासिद्धायां भक्तौ लक्षितायां ज्ञानयोगभक्तीनामङ्गप्रधानभावविवेकाय द्वितीयाह्निकस्यारम्भः ।

## सा मुख्येतरापेक्षितत्वात् ॥ १० ॥

आह्निकसमाप्तावुक्तस्य पुनः स्मरणाय सेति निर्देशः । सा परा भक्तिर्मुख्या प्रधानम् इतरैरात्मज्ञानयोगादिभिः स्वोपकार्यतयापेक्षितत्वादित्यर्थः छान्दोग्ये 'यो वै भूमा तत्सुख'मित्याद्युपक्रम्याम्नायते ।

'आत्मैवेदं सर्व'मिति 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्ना-त्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवती'ति तत्रा-त्मरतिरूपायाः परभक्तेः पश्यन्निति दर्शनमप्रियत्वादिभ्रमनिरासमुखे-नाङ्गं भवति। यथा दण्डी प्रैषमन्वाह प्राचीनावीती दोहयति अभिजानन् जुहोति धनवान् सुखवानित्यादौ दण्डाद्यङ्गं तथा दर्शनमपि रतेरङ्गं मननविज्ञानयोरुक्तप्रदर्शनार्थतया 'न्यायप्राप्तयोरनुवादः'। एवमात्म-क्रीडादेरतिनैयत्यादर्थप्राप्तोऽनुवाद एव अन्यथा रत्युद्देशेन दर्शनादि-विधौ दर्शनाद्युद्देशेन वा रत्यादिविधौ वाक्यानि भिद्येरन्। तस्मात् (पूर्वमीमांसायाम्। अ० ३।पा० १। सू० २) 'शेषः परार्थत्वादि-ति'न्यायाद्दर्शनमङ्ग'मिति। अत एव भगवान् मनुरपि। (महाभार०। शान्ति०। अ० १९४।)

यस्त्यक्त्वा प्राकृतं कर्म नित्यमात्मरतिर्मुनिः।
सर्वभूतात्मभूतात्मा स्याच्चेत् परतमा गतिः॥

इत्यनेनात्मरतेः प्राधान्यमाहेति ॥ १० ॥

## प्रकरणाच्च ॥ ११ ॥

प्रकरणं रतेरेव फलवत्त्वात् तस्यास्तत्प्रकरणस्थं दर्शनमङ्गं भवितु-मर्हतीति ॥ ११ ॥

## दर्शनफलमिति चेन्न तेन व्यवधानात् ॥ १२ ॥

अथ दर्शनस्यैव फलं स्वाराज्यलक्षणममृतत्वं तथा च तस्यैव प्रक-रणमिति वैपरीत्यमिति चेन्न तेन तच्छब्देन व्यवधानात्। (छां०) 'स स्वराड् भवतीत्यत्र तच्छब्देन सन्निकृष्टात्मरतिमानेवोपस्थाप्यते न वि-प्रकृष्टः पश्यन्नि'ति व्यवहितोपस्थितौ कारणाभावात्। प्रकरणमेव कारणमिति चेन्न अन्योन्याश्रयात् ॥ १२ ॥

## दृष्टत्वाच्च ॥ १३ ॥

दृष्टं हि लोके सौन्दर्यादिज्ञानस्य तरुण्यास्तरुणे रतिहेतुत्वं न तु र-

तेर्ज्ञानहेतुत्वमिति दृष्टोपकारत्वादप्यङ्गत्वमवसीयते। दृष्टं च प्रकृते-निष्करुणत्वाल्पमहिमत्वाप्रियत्वादिज्ञानं मनोमालिन्यकारणं भूतेषु करुणाबहुलाव्याहतैश्वर्यातिशयितरूपाश्रय आत्मेति ज्ञानान्मालिन्य-निवृत्तिस्ततः परा भक्तिरिति। अत एव गीयते(गी०।अ०५।श्लो०१७)

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः॥ इति।

तथा आयुर्वेदेऽपि (अष्टाङ्गहृदये। अ० १। श्लो० २३)।

धीर्धैर्यात्मादिविज्ञानं मनोदोषौषधं परम्। इति॥ १३॥

## अत एव तदभावाद्बल्लवीनाम्॥ १४॥

यत एव ज्ञानं दृष्टोपकारकमङ्गमत एव दृष्टोपकारं निरस्य मनोमा-लिन्यादिबाधात् प्रधानभगवदनुरागमात्रेण बल्लवीनां मुक्तिः स्मर्यते। यथा (विष्णुपुराणे। अंशे ५। अ०१३। श्लो० १४। १५)।

तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया सती।
तदप्राप्तिमहादुःखविलीनाशेषपातका॥
चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम्।
निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका॥ इति।

अत्र सुखदुःखलिङ्गेनानुरागोऽनुमीयते न मुक्तिरिति वाक्यार्थः। द्वारबाधादनवहतकृष्णलेनापि कर्मणा फलसिद्धिरिव तासां रागान्मुक्तिस्तदप्यवगम्यते ज्ञानमङ्गमेव प्रधानत्वे तु तदभावे फलं न स्यात् चिन्ता च न ब्रह्मात्मैक्यज्ञानं तत्कारणश्रवणमननाद्यसम्भवात्। किन्त्वनुरागनियतानुस्मृतिरेव। न चायमर्थवादः अपूर्वार्थत्वात् सन्निधौ विध्यभावाच्चेति॥ १४॥

## भक्त्या जानातीति चेन्नाभिज्ञप्त्या साहाय्यात्॥१५

इदानीं श्रुतिविरोधेन प्रकरणस्थानलिङ्गबाधमाक्षिप्य समाधीयते यथा श्रुतं (गी०।अ० १८। श्लो० ५५)।

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ इति ॥

तत्र (तैत्तिरीयसं० । अ० १ । प्र० ५ । अनुवाकः ८) 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इतिवत् कारकश्रुत्या बलीयस्या भक्तेर्ज्ञानहेतुत्वमवसीयते। यद्यपि दृष्टत्वादित्यनेन दृष्टोपकारे प्रत्यक्षगम्ये न श्रुतेरवकाशः तथापि ब्रह्मविषयिण्या रतेर्ब्रह्मविषयज्ञानोपकार्यत्वं न प्रत्यक्षगम्यम्। किन्तु तरुण्यादे रतौ तथा दर्शनेन ब्रह्मगोचरायामप्यनुमातव्यम्। तथा च लिङ्गत्वे पर्यवसानादिति चेन्न दोषः।तथा हि यदि केवलं जानातीति वदेन्न त्वेवम्। किन्त्वभिजानातीति। अभिज्ञा पूर्वज्ञातज्ञानमुच्यते। तथा भक्त्युपकारिपूर्वज्ञानं तत्फलरूपभक्तिप्रवर्तकम्। अनन्तरं यावत् तद्दार्ढ्यं भक्त्यैवाभिज्ञप्तिभावेनापेक्ष्यते व्रीह्यवहननेनावघातवदिति। कार्यसाहाय्यार्थमुक्तं ततो ज्ञानदार्ढ्येन भक्तिदार्ढ्ये सति विशत इति। तस्मान्नेयं श्रुतिः किन्तु न्यायप्राप्तानुवाद इति। एतमेवार्थं स्फुटीकरोति ॥ १५ ॥

## प्रागुक्तं च ॥ १६ ॥

भक्त्या मामित्यस्य पूर्वं ब्रह्मभूयाय कल्पत इत्यभिधाय (गी० अ० १८। श्लो० ५४)।

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥

इत्युक्तम्। तस्य तु ज्ञातब्रह्मणो ज्ञानप्रयोजनाभावाद् युक्तमनुवादत्वमिति ॥ १६ ॥

## एतेन विकल्पोऽपि प्रत्युक्तः ॥ १७ ॥

एतेन ज्ञानस्याङ्गत्वनिर्णयेन ज्ञानभक्त्योरत्र विकल्पपक्षोऽपि प्रत्युक्तः निराकृत इति मन्तव्यम्। नह्यङ्गाङ्गिनोरेकत्र विकल्पो भवतीति अपिशब्दात् समुच्चयोऽपीति ॥ १७ ॥

## देवभक्तिरितरस्मिन् साहचर्यात् ॥ १८ ॥

क्वचिदेवं श्रूयते ( श्वेताश्व०। )

'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ इति।

अत्र देवभक्तिरीश्वरेतरस्मिन् देवे मन्तव्या कुतः गुरुभक्तिसाहचर्यात्। साहचर्यं हि नामृतफलायां भक्तौ घटते। इन्द्रादिदेवतास्त्वाराधिताः शुभवज्ज्ञानफलाय भवन्तीति साहचर्यमपि निर्णायकम्। साहचर्यादुलूकशब्दवदुक्तयुक्तेरुपष्टम्भकमेतत् ॥ १८ ॥

## योगस्तूभयार्थमपेक्षणात् प्रयाजवत् ॥ १९ ॥

योगः पुनर्ज्ञानार्थं भक्त्यर्थं च भवति। समाहितमनस्कताया उभाभ्यामपेक्षणात्। ननु [ पूर्वमीमांसायाम्। अ० ३। पा० १। सू० २१ ] 'गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्यादि'तिन्यायात् प्रधानाङ्गं योगः। कथमङ्गाङ्गमित्यत आह प्रयाजवदिति यथा प्रयाजो वाजपेयाद्यङ्गं तदीयदीक्षणीयादेरप्यङ्गं तद्वत्। तदङ्गताबोधकप्रमाणाविशेषात्। केवलं ज्ञानार्थं योगानुष्ठानप्रसङ्गेन भक्तिमुपकरोतीति। एवं विषयवैराग्यमपि उभयार्थं मन्तव्यम् ॥ १९ ॥

ननु [ योगे। पा० १। सू० २३ ] 'ईश्वरप्रणिधानादि'ति पतञ्जलिस्मरणं दुरपह्नवं तत्र प्रणिधानाभिधेयस्य भगवद्भजनस्य समाधिसिद्ध्यर्थत्वमिति कथं भक्तेः प्राधान्यमित्यत आह।

## गौण्या तु समाधिसिद्धिः ॥ २० ॥

तत्र प्रणिधानं गौणभक्तिरेव न प्रधानं तया समाधिसिद्धिरिति न स्मृतिविरोधोऽपीति। भवति च वाक्यशेषस्तत्रैव [ योगे। पा० १। सू० २७।२८ ]'तस्य वाचकः प्रणवः। तज्जपस्तदर्थभावनमि'ति २०

## हेया रागत्वादिति चेन्नोत्तमास्पदत्वात् सङ्गवत् ॥ २१ ॥

योगशास्त्रप्रस्तावादिदं सूत्रम् । योगशास्त्रोक्तरागत्वाविशेषाद्भक्तिरपि मुमुक्षुणा हेयैव । तथा च सूत्रम् [ यो०। पा० २।सू० ३ ] 'रागद्वेषाभिनिवेशाः क्लेशा' इति । एवञ्चेदुच्यते । नैवं वाच्यम्। उत्तमास्पदत्वाद्भक्तेः परमेश्वरविषयत्वादिति यावत्। नहि रागत्वमात्रेण हेयत्वं किन्तु संसारानुबन्धिरागत्वेनैव। यथा सङ्गत्वमात्रेण न त्याज्यता किन्तु असत्सङ्गत्वेन तद्वत्। तथा चेश्वरभक्तिर्हेया रागत्वादित्यत्र संसारानुबन्धित्वं मोक्षाननुगुणत्वं चोपाधिः। न चासात्त्विकी सा [गी० । अ० १७। श्लो० ४ ] यजन्ते सात्त्विका देवानित्यादिना सात्त्विकत्वकीर्त्तनादिति ॥ २१ ॥

## तदेव कर्मिज्ञानियोगिभ्य आधिक्यशब्दात् ॥ २२ ॥

तदेव भजनं मुख्यं तस्या भक्तेर्वा मुख्यत्वम्। एतत् सर्वथैव निश्चितं यस्मादेवं शब्यते [ गी० । अ० ६। श्लो० । ४६ । ४७ ]।

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥
योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान् भजते यो मां स मे युक्तमो मतः ॥ इति ।

अत्र विशेषणानां तपआदीनामाधिक्यनिबन्धनं विशेष्याणामाधिक्यं क्रमादिति मन्तव्यम्। न खल्वङ्गस्य मुख्यादाधिक्यमुपपद्यते तस्माद्भक्तिः प्रधानमिति ॥ २२ ॥

श्रुत्यर्थेनापि तदुत्पत्तिपरिहारार्थं पठति ।

## प्रश्ननिरूपणाभ्यामाधिक्यसिद्धेः ॥ २३ ॥

अत्र कृत्स्नोऽपि द्वादशाध्याय उदाहरणम् ( गी० । अ० १२। श्लो० १-७ )।

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।

ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥ इति प्रश्नः।

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते।
श्रद्धया परयोपेतास्ते मे युक्तमा मताः ॥ २ ॥
ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥
सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४ ॥
क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥
ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥
तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात्।
भवामि न चिरात् पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥

इति निरूपणम्। ताभ्यां भक्तेः प्राधान्यसिद्धेः नार्थवादत्वमायाति। प्रश्ननिरूपणं हि निर्णयार्थं प्रसिद्धं न स्तुत्यर्थमिति। केवलाङ्गानुष्ठानेन क्लेशाधिक्यमेवेति ॥ २३ ॥

श्रद्धाप्रसङ्गाद्भक्तेः श्रद्धारूपत्वशङ्कापिशाचीं निराकरोति।

## नैव श्रद्धा तु साधारण्यात् ॥ २४ ॥

भक्तिर्न सर्वथा श्रद्धात्वेन शङ्कनीया श्रद्धायाः कर्ममात्राङ्गत्वात्। न चैवमीश्वरभक्तिरिति ॥ २४ ॥

## तस्यां तत्त्वे चानवस्थानात् ॥ २५ ॥

(गी० । अ० ६ । श्लो० ४७)।

श्रद्धावान् भजते यो मां स मे युक्तमो मतः।

इति हि श्रुतम्। तत्र भक्तौ श्रद्धारूपायां श्रद्धाङ्गत्वे प्रतीतेऽनवस्थाप्रसङ्गात् श्रद्धाया अनङ्गत्वात्। अन्यथा तस्यामपि श्रद्धान्तरमि-

त्यनवस्थैव। तस्मादारम्भणीयारम्भे आरम्भणीयवदाचमने चाचमनव-
द्भक्तौ श्रद्धा नाङ्गं स्यात्। श्रद्धाभक्तिसमन्वित इति भेदेन कथनाच्च।२५।

**ब्रह्मकाण्डं तु भक्तौ तस्यानुज्ञानाय सामान्यात्॥ २६॥**

ज्ञानाप्राधान्ये ज्ञानकाण्डमित्युत्तरकाण्डप्रसिद्धिर्न स्यादिति म-न्वानं प्रत्युच्यते। भक्त्यर्थं ब्रह्मकाण्डं श्रूयते न ज्ञानार्थम्। अज्ञातार्थ-ज्ञापनस्य काण्डद्वयसामर्थ्यात्। अन्यथा धर्मज्ञानार्थं पूर्वकाण्डाम्नात-मपि ज्ञानकाण्डं स्यात्। नच ज्ञानविधिः सम्भवति येन तत्प्राधान्याद-पि ज्ञानकाण्डं भवेदिति। तस्माज् ज्ञानकाण्डमिति भ्रमः। किन्तु ब्र-ह्मकाण्डमेव। अतएव (ब्रह्मसू०। पा० १। सू० १) 'अथातो ब्रह्म-जिज्ञासा' इति सूत्रितम्। तच्च भक्त्यर्थत्वाद्भक्तिकाण्डमपीति॥ २६॥

इत्याचार्यस्वप्नेश्वरविद्वद्वरविरचिते शाण्डिल्यशतसूत्रीये भाष्ये प्रथ-माध्यायस्य द्वितीयमाह्निकम्॥ २॥

समाप्तश्च प्रथमोऽध्यायः॥ १॥

---

तस्या भक्तेः साक्षात् प्रयत्नानिष्पाद्यत्वेन निष्पत्त्यर्थं साधनान्तरा-पेक्षा तत्रान्तरङ्गसाधनं ज्ञानं बहिरङ्गसाधनान्यपरभक्तिप्रभृतीनि तेषां विवेकाय द्वितीयाध्यायारम्भः।

**बुद्धिहेतुप्रवृत्तिराविशुद्धेरवघातवत्॥ २७॥**

बुद्धिर्ब्रह्मप्रमितिः सा यद्यपि कृत्यनिष्पाद्या तथापि तद्धेतूनां श्रव-णमनननिदिध्यासनादीनां तन्निष्पत्तयेऽनुष्ठानमावश्यकम्। तत्किं सकृत् कृते कृतः शास्त्रार्थ इति न्यायात् सकृत् प्रवर्त्तते उत यावद्भक्ति-दार्ढ्यम्। तत्रोच्यते भक्तिपरिशुद्धिपर्यन्तं तत्प्रवृत्तिरावश्यकी यथा व्री-हीनवहन्तीत्यनेन विहितव्रीह्यवघातस्य यावद्वैतुष्यमनुष्ठानं शास्त्रार्थः तथा दृष्टोपकारकत्वान्मनोमालिन्यनिरासपर्यन्तं ज्ञानाद्यनुष्ठाने यत-नीयमिति॥ २७॥

तेषामङ्गानां यान्यङ्गानि तदनुष्ठानं तु न प्रसज्यत इत्यत्रोत्तरम्।

**तदङ्गानां च ॥ २८ ॥**

तदङ्गानां गुर्वनुगमनवेदाविरोधितर्कानुसन्धानशमादीनामप्यनुष्ठानं युक्तम्। नह्यङ्गविकलान्यङ्गानि सैन्यसेनापतिवत् प्रधानोपकाराय क्षमन्ते ॥ २८ ॥

इदानीं बुद्धिविषयपरिशुद्धिश्चिन्त्यते।

**तामैश्वर्यपरां काश्यपः परत्वात् ॥ २९ ॥**

तां बुद्धिं परमेश्वरैश्वर्यादिमद्विषयिणीं निःश्रेयसफलां काश्यप आचार्यो मन्यते कुतः जीवात्मभ्यः परत्वात् तैः स्वज्ञानाय परज्ञानस्यापेक्षितत्वात्। एतन्मते जीवब्रह्मणोरत्यन्तं भेद इति ॥ २९ ॥

**आत्मैकपरां बादरायणः ॥ ३० ॥**

बादरायण आचार्यः पुनः शुद्धात्मविषयिणीमेव मनुते तथा च सूत्रं [ ब्रह्मसू०। अ०४। पा०१। सू०३ ] 'आत्मेति त्ववगच्छन्ति ग्राहयन्ति चे'ति। एतन्मते जीवब्रह्मत्वकल्पनाया मिथ्यात्वाच्छुद्धचिदात्ममात्रबुद्धेस्तत्त्वज्ञानत्वात् तदेव मुक्तिफलायेति ॥ ३० ॥

**उभयपरां शाण्डिल्यः शब्दोपपत्तिभ्याम् ॥ ३१ ॥**

शाण्डिल्य आचार्यस्तूभयपरामेव मन्यते कुतः शब्दो हि वेदस्तथा ब्रूते [ छां०।] 'सर्वं खल्विदं ब्रह्म तज्जलानीति शान्त उपासीत' इत्युपक्रम्य 'एष म आत्मान्तर्हृदयमेतद्ब्रह्मैतमितः प्रेत्याभिसम्भवितास्मीति यस्य स्यादद्धा न विचिकित्सास्तीति ह स्माह शाण्डिल्यः शाण्डिल्य' इति विचिकित्स्य तदुभयविषयविदो ब्रह्माभिप्रायलक्षणप्रेमभक्तिजन्यब्रह्मसम्भवफलत्वमाह। [ तैत्तिरीयसं०।अ०७।प्र०१। अनु०१०। मं०२ ] 'बबरः प्रावाहणिरकामयते'तिवत् पूर्वशाण्डिल्यार्थत्वाच्च नित्यानित्यसंयोगविरोधः। वस्तुतो वेदस्य भगवत्कर्तृकत्व-

मेव। श्रुतेरपि (तैत्तिरीयारण्यके। प्र० ३। अनु० ११। दशकं४)।

तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे।

छन्दाꣳसि जज्ञिरे तस्माद्यजुस्तस्मादजायत॥ इति।

उपपत्तिश्च भवति ब्रह्म खलु परमैश्वर्यवत्तया श्रुतं जीवस्वरूपतया च तथा च श्रुतिः [तैत्तिरीयोप०।पृ० १२३]'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्तीति तद्विजिज्ञासस्व'। तथा [गी०। अ० १५। श्लो० ७]।

ममैवांशो जीवलोके जीवभूतः सनातन इति।

तत्र किं कस्योपमर्दकम्। तस्मात् (छां०।) 'तत्त्वमस्या'दिवाक्येनोभयबोधनमेवोपपत्तिमदिति॥ ३१॥

## वैषम्यादसिद्धमिति चेन्नाभिज्ञानवदवैशिष्ट्यात्॥३२॥

ननूभयविषयत्वमेव न सिद्ध्यति वैषम्यात्। विषमं हि जगत्कर्तृत्वादिविशिष्टे तदकर्तृत्वादिविशिष्टज्ञानमिति चेन्न यतः सोऽयं देवदत्तः सोऽहमिति प्रत्यभिज्ञावदेकविशिष्टेऽपरवैशिष्ट्यमन्तरेण सामानाधिकरण्यस्य स्वरूपाभेदांशगोचरकत्वेन तदुपपत्तेः। विशिष्टवैशिष्ट्यबुद्धेरौत्सर्गिकत्वात्। अथ विशेष्यमात्रलक्षणया स्वरूपाभेदोपस्थितिरिति मतं तन्न लक्षणया बोधस्य जघन्यत्वात् लक्ष्योपस्थितौ तदवच्छेदकोपस्थितिहेतुसत्त्वाच्च। अन्यथा कदाचिच्छक्यतावच्छेदकमन्तरेणापि शक्यस्मृतिर्भवेत् इत्यास्तां तावत्॥ ३२॥

## न च क्लिष्टः परः स्यादनन्तरं विशेषात्॥ ३३॥

नचैवं सति जीवोपाधिक्लेशादिमत्त्वमपि परमेश्वरे प्रसज्येतेति वक्तुं शक्यम्। उक्ताभेदबुद्ध्यनन्तरं क्लेशादेरात्मासम्बन्धित्वरूपविशेषनिर्णयादिति॥ ३३॥

## ऐश्वर्यं तथेति चेन्न स्वाभाव्यात्॥३४॥

नन्वेदं क्लेशादिवदैश्वर्यं कर्तृत्वादिलक्षणं परमेश्वरस्य बाध्यते वैभवं

स्वात्मनि प्रतीतत्वान्न क्लेशादिवदिति चेन्न कर्तृत्वादेः परमेश्वरस्य स्वाभाव्यात्। नहि वह्नेरुष्णस्वाभाव्यमन्यथा भवति। तस्मादस्वाभाविकत्वमुपाधिरिति । अत एव दर्पणादिप्रतिफलितबिम्बे भास्वति मालिन्यादिबाधेऽपि वृत्तिप्राकाश्यादिस्वभावस्याबाध एवेति॥ ३४॥

ननु परमेश्वरस्य सत्यमैश्वर्यं जीवानां तु कथमागन्तुकः क्लेशादिरित्यत्र हेतुमाह।

## अप्रतिषिद्धं परैश्वर्यं तद्भावाच्च नैवमितरेषाम्॥ ३५॥

नहि कस्यामपि श्रुतौ परमेश्वरस्यैश्वर्यं प्रतिषिद्धमस्ति येन प्रतिपन्नमपि बाधितं स्यात्। प्रत्युत (छां०।) सत्यसङ्कल्प इत्यादिना तस्य स्वाभाव्यमवगम्यते। नच जीवस्येव प्रतीतधर्मत्यागे कारणमस्ति सदैश्वरत्वात् सदैव मुक्तत्वात् । तदितरेषां तु जीवानां नैवं स्वाभाविकः क्लेशादिः कस्मात् तद्भावात् । श्रूयते हि [छां०] 'परं ज्योतिरुपसम्पद्यते स्वेन रूपेणाभिनिष्पद्यते' इत्यादिभिः तच्च स्वभावत्वे नोपपद्यते। उपपद्येतापि यदि परस्य क्लेशादिस्वभावः स्यात्। न चैवं तस्माद्ब्रह्मभावलक्षणमुक्त्यन्यथानुपपत्त्यापि जीवानामौपाधिकी संसृतिरिति। यद्यपि परस्यापि मायौपाधिकमैश्वर्यं तथापि तदुपाधेः कदाचिदपि नात्यन्तलयः। जीवोपाधिबुद्धीनां तु परभक्तौ सत्यामत्यन्तलय एव। नहि भगवतो माया शक्तिः क्षीयते जीवानामनन्तत्वेन तत्संसारतद्भञ्जनाद्यर्थं भगवतः प्रवृत्तेरावश्यकत्वादिति । एवञ्च (बृहदार०)। 'ध्यायतीव लेलायतीवे'त्यादिश्रुतिः 'अथात आदेशो नेति नेती'त्यादिश्रुतिश्च जीवविषयिण्येवेति॥ ३५॥

## सर्वानृते किमिति चेन्नैवम्बुद्ध्यानन्त्यात्॥ ३६॥

अथ क्रमशो मुक्तावपि यदा सर्वबुद्धीनां विलयस्तदा परोपाधेः स्थितौ प्रयोजनाभावात् तस्याप्यत्यन्तलये किं कृतमैश्वर्यं स्वभाव इति चेन्नैवं भवति । जीवोपाधिबुद्धीनामनन्तत्वात् तादृशकाल एव

नास्तीति युक्तं स्वाभाविकमैश्वर्यम् । नच प्रागभावाः प्रतियोगिजनकास्तस्वादित्येतावतापि कालस्तथाभूतः सिद्ध्यति । अथैकदा सर्वे जनितप्रतियोगिन इति चेन्न अप्रयोजकत्वात् । सर्वकार्यशून्यकालानुमानं त्वत्यन्ततर्कशून्यम् । अन्यथा सर्वे प्रागभावाः कदाचिदजनितप्रतियोगिन इत्यनुमानेन ध्वंसानाधिकरणः प्राक्कालः सिध्येत् । अथाहमेवामुक्तः स्यामिति धिया मुक्तावयत्नप्रसङ्ग इति चेत् फलानिश्चयेऽप्युपायतानिश्चयेन तत्साधने प्रवृत्तिरस्तु । प्रत्युत सर्वमुक्तिनिश्चये तत एवाप्रवृत्तिप्रसङ्ग इति ॥ ३६ ॥

अथोपादानकर्तृत्वलक्षणमैश्वर्यं यदि परस्य साहजिकं तदा विकारित्वमेव प्राप्तं मृदादिवदित्यत उच्यते ।

**प्रकृत्यन्तरालादवैकार्यं चित्सत्त्वेनानुवर्तमानात् ॥ ३७॥**

प्रकृतिर्नाम जडकार्यमात्रोपादानम् । सा विकार्या नतु ब्रह्मस्फुरणरूपसत्तया प्रकृत्यनुगतत्वेन च परस्य कर्तृत्वादि । नच प्रकृतिरेव सत्तेति वक्तुं शक्यते जीवानामसत्त्वप्रसङ्गात् । तेषां प्रकृतेः परत्वात् । तस्मात् प्रकृतिलक्षणां मायाशक्तिमन्तरालीकृत्य परस्य कर्तृत्वादिस्वाभाव्यमिति न विकार्यता नहि मायया सृजन्मायावी मायाकार्यो भवतीति । यद्यपि तादात्म्येन कार्यत्वमेव विकार्यत्वं तच्च वर्त्तत एव तथापि क्षीरादिवन्न स्वरूपपरिवर्त्तनेन विकारित्वम् । यद्वा स्वाधिकविकाराहेतुत्वेन घटं प्रति दण्डादिवदविकार्यत्वमस्ति । तदेवोक्तं प्रकृत्यन्तरालादिति ॥ ३७ ॥

ननु मायोपादानत्वे मायायामेव जगत् प्रतिष्ठितं तर्हि कथं (तैत्तिरीयखिलोपनि०। खं० २६ ) 'तस्मिन् सर्वं प्रतिष्ठित'मिति श्रुत्या जगतो ब्रह्मप्रतिष्ठा प्रतिपाद्यत इत्यत्रोत्तरम् ।

**तत्प्रतिष्ठा गृहपीठवत् ॥ ३८ ॥**

तस्मिन् ब्रह्मण्यपि विकारप्रतिष्ठानमविरुद्धं गृहपीठवत् । यथा

गृहमध्यस्थपीठे स्थितोऽपि गृहे तिष्ठति पीठे तिष्ठतीति व्यपदिश्यते तद्वत्॥ ३८ ॥

ननु तर्हि प्रकृत्यैव ब्रह्मान्यथासिद्धमस्तु नेत्युच्यते।

## मिथोऽपेक्षणादुभयम्॥ ३९ ॥

ब्रह्म प्रकृतिश्चोभयमपि कारणम्। परस्परं चेतनाचेतनाभ्यां स्वज्ञानाय स्वशक्तिविषयाय चाऽपेक्षितत्वात् किं कस्यापेक्षकमिति॥३९॥

इदानीं स्वशास्त्रे व्यवहारलाघवाय पदार्थसङ्कलनमुच्यते।

## चेत्याचितोर्न तृतीयम्॥ ४० ॥

चेत्या प्रकृतिः चिद् ब्रह्म तयोर्न तृतीयमर्थान्तरमत्रेत्यर्थः। ननु न तृतीयस्य सिद्ध्यसिद्धिभ्यां चोद्यत इति चेत्। अयमर्थः ब्रह्मभिन्ने ज्ञातृत्वं प्रकृतिभिन्ने च ज्ञेयत्वं निषिध्यत इति ॥ ४० ॥

अथ प्रकृतिपुरुषयोरसम्बन्धे सर्वकार्यविलोपः। सम्बन्धे तु स एव तृतीय इत्यत आह।

## युक्तौ च सम्परायात्॥ ४१ ॥

मिथ इत्यनुवर्त्तते। तौ प्रकृतिपुरुषौ बुद्धिस्थौ परस्परं प्रतिसम्बन्धरूपौ न त्वागन्तुकः कश्चित् कस्मात् सम्परायात् अनादित्वादेव। तथा च गीतायाम् (अ०।१३।श्लो० १९) 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपी'ति। अथानादिरेव सम्बन्धान्तरमस्त्विति चेन्न जडाजडविकल्पेन तयोरनन्यत्वादिति॥ ४१ ॥

ननु प्रकृतिर्मिथ्यैव मायारूपत्वात् तस्याः (श्वेताश्व०)।

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।

इत्यादिश्रुतिभ्यः। तथा च कथं वेद्यं पदार्थ इत्यत आह।

## शक्तित्वान्नानृतं वेद्यम्॥ ४२ ॥

वेद्यं प्रधानं नानृतं न मिथ्या भवितुमर्हति कुतः शक्तित्वादेव।

नहि मायावी मायाशक्तिं विना विहितागन्तुकसृष्टये प्रभवति । किञ्च (छां०।) 'कुतस्तु खलु सौम्यैवं स्यादसतः सज्जायेते'ति श्रुतिः कार्यसत्त्वेन कारणसत्तां वदन्ती सर्वसत्तामाह नानृतत्वम् । अस्ति तु सर्वदा भागवती सृष्टिः सादृश्यसहकार्यपेक्षा चेतनकृतसृष्टित्वान्मायिकसृष्टिवदिति । न चादृष्टादिभिरर्थान्तरम् एकशक्त्यपेक्षायां लाघवाद्भोगतत्साधनेतरेषु अदृष्टहेतुतायां मानाभावात् । एवं सर्वकार्येषु मिथो व्यभिचारादेकनित्यसहकारिशक्तिसिद्धिः । तदवान्तरानेककल्पनं तु फलमुखमिति न गौरवायेति । विस्तरोऽस्यैव तृतीये इति ॥ ४२ ॥

गता प्रासङ्गिकी चर्चा प्रकृतमनुसरति ।

**तत्परिशुद्धिश्च गम्या लोकवल्लिङ्गेभ्यः ॥ ४३ ॥**

यद्यपि जानामीच्छामीत्यादिवदहं भजे अनुरज्ये इत्येवमादिना प्रत्यक्षगम्यैव भक्तिस्तथापि तस्या दृढतरसंस्कारवैशिष्ट्यलक्षणा परिशुद्धिर्न प्रत्यक्षतो निर्णेतुं शक्यते ज्ञानप्रामाण्यवत् । तस्मात् तन्निर्णयो लोकवज्जातलिङ्गेभ्य एव । यथा लोकेऽनुरागतारतम्यं तत्कथादावश्रुपुलकादिविकारैरनुमीयते तद्वदिति ॥ ४३ ॥

न केवलं लोकवल्लिङ्गानि भवन्ति महर्षीणां स्मृतिभ्योऽपि तानि लिङ्गानि बाहुल्येन लक्ष्यन्त इत्याह ।

**सम्मानबहुमानप्रीतिविरहेतरविचिकित्सामहिमख्यातितदर्थप्राणस्थानतदीयतासर्वतद्भावाप्रातिकूल्यादीनि च स्मरणेभ्यो बाहुल्यात् ॥ ४४ ॥**

यथार्जुनस्य सम्मानम् ।

प्रत्युत्थानं तु कृष्णस्य सर्वावस्थो धनञ्जयः ।
न लङ्घयति धर्मात्मा भक्त्या प्रेम्णा च सर्वदा ॥

बहुमानं यथा इक्ष्वाकोः । [ नृसिंहपु० । अ० २५ । श्लो० २२ ]

पक्षपातेन तन्नाम्नि मृगे पद्मे च तादृशि।
बभार मेघे तद्वर्णे बहुमानमतिं नृपः॥

प्रीतिर्यथा विदुरस्य। [महाभारते। उद्यो०। अ० ८८।]

या प्रीतिः पुण्डरीकाक्ष तवागमनकारणात्।
सा किमाख्यायते तुभ्यमन्तरात्मासि देहिनाम्॥

विरहो यथा गोपीनाम् [ विष्णुपु०। अंशे ५। अ० १८। श्लो० १७]

गुरूणामग्रतो वक्तुं किं ब्रवीमि न नः क्षमम्।
गुरवः किं करिष्यन्ति दग्धानां विरहाग्निना॥

इतरविचिकित्सा यथा श्वेतद्वीपनिवासिनाम्। नारददर्शनेऽपि विघ्नबुद्धिः यथा चोपमन्योः। (महाभारते। अनुशा०। अ० १४।

अपि कीटः पतङ्गो वा भवेयं शङ्कराज्ञया।
ननु शक्र त्वया दत्तं त्रैलोक्यमपि कामये॥

महिमवृद्धौ यथा यमस्य। (नृसिंहपु० अ० ८। श्लो० २१ )

नरके पच्यमानस्तु यमेन परिभाषितः।
किं त्वया नार्चितो देवः केशवः क्लेशनाशनः॥

( विष्णुपु०। अंशे ३। अ० ७। श्लो० १० )।

स्वपुरुषमभिवीक्ष्य पाशहस्तम्।
वदति यमः किल तस्य कर्णमूले॥
परिहर मधुसूदनप्रपन्नान्।
प्रभुरहमन्यनृणां न वैष्णवानाम्॥ ७॥

तदर्थप्राणस्थितिर्यथा हनूमतः तेनैवोक्तम्। ( वाल्मीकीये। उत्तरकाण्डे। स० १०७। श्लो० ३१॥ )।

यावत् तव कथा लोके विचरिष्यति पावनी।
तावत् स्थास्यामि मेदिन्यां तवाज्ञामनुपालयन्॥ ८॥

अथ वा कृत्यकृत्यानामपि नारदादीनां तदेकाराधनार्थं प्राणधार-

णाम्। अत एव श्रुतिः। ( नृसिंहतापिनी। खं०६ ) 'यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्चे'ति॥ ९॥

तदीयताभावस्तु वसोरुपरिचरस्य (महाभारते।शा०।अ०३३७।)

आत्मराज्यं धनं चैव कलत्रं वाहनं तथा।

एतद्भागवतं सर्वमिति तत् प्रेक्षते सदा॥ १०॥ इति।

सर्वभूतेषु तद्भावो यथा प्रह्लादस्य प्रसिद्धः। उक्तश्च तेनैव। ( विष्णुपु०। अंशे१। अ०१९। श्लो०५ )

एवं सर्वेषु भूतेषु भक्तिरव्यभिचारिणी।

कर्तव्या पण्डितैर्ज्ञात्वा सर्वभूतमयं हरिम्॥ ११॥

तस्मिन्नप्रातिकूल्यं यथा हन्तुमागतेऽपि भगवति भीष्मस्य। तेनैवोक्तम्। ( महाभारते। भीष्मप०।अ०५८। )

एह्येहि देवेश जगन्निवास।

नमोऽस्तु ते शार्ङ्गगदासिपाणे॥

प्रसह्य मां पातय लोकनाथ।

रथादुदग्राद्भुतशौर्यसंख्ये॥ १२॥

आदिशब्दादुद्धवाक्रूरादिचेष्टितान्यपि द्रष्टव्यानि। यद्यपि द्वेषविपक्षभावादित्यत्रेदमुक्तं तथापि तत्र रागलिङ्गत्वेनात्र च बहुभक्तिपरिशुद्धिलिङ्गतयेति विशेष इति॥ ४४॥

ननु स्वामिन्यनुरागिणां तदनुग्रहतारतम्यवत्सु द्वेषेर्ष्यादयो भवन्ति तेऽपि किं लिङ्गानि नेत्याह।

## द्वेषादयस्तु नैवम्॥ ४५॥

तदसम्भवादेव। यथोक्तं भगवता द्वैपायनेन। ( महाभारते। अनुशा०।अ०१४९। )

न क्रोधो नच मात्सर्यं न लोभो नाशुभा मतिः।

भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे॥ इति।

शिशुपालस्य तु द्वेषात् स्मरणं ततः परा भक्तिस्ततो मुक्तिरित्येव क्रम इति ॥ ४५ ॥

अथ प्रायशो भगवदवतारविषयाण्येव तानि लिङ्गानि स्मर्यन्ते ब्रह्मज्ञानजन्यत्वात् पूर्णविषयता च भक्तेर्युक्तेत्यत्र सिद्धान्तमाह।

## तद्वाक्यशेषात् प्रादुर्भावेष्वपि सा ॥ ४६ ॥

सा परा भक्तिः प्रादुर्भावात्मविषयापि भवति कस्मादिदं ज्ञायते वाक्यशेषात् ( गी०।अ०७।श्लो०२३ )

देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि । इति ।

प्रतिज्ञातार्थस्थिरीकरणाय देवतान्तरभक्तिनिन्दायां वाक्यशेषो भवति ( गी०।अ०७।श्लो०२१ )

योयो यांयां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ इति ।

तत्र योयो यांयां भक्त इत्येतावदुक्तार्थसिद्धौ तनुपर्यन्तनिर्देशाद्भक्तेस्तन्वात्मविषयत्वे तात्पर्यमुन्नीयते । प्रकरणञ्च भक्तेरेवेति ॥ ४६॥

## जन्मकर्मविदश्चाजन्मशब्दात् ॥ ४७॥

जन्म शरीराविनाभूतवेदप्रणयनदैत्यवधभक्तदर्शनादिकार्याय भगवतः शरीरपरिग्रहः। कर्म च वेदप्रणयनादि । तत्त्ववेदिनो जन्माभावफलाय भवति। यथाह ( गी०।अ०४।श्लो०९ )

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ इति ।

नच जन्मकर्मवेदनस्य साक्षादमृतत्वफलमुपपद्यते। किन्तु तद्गतमनोमालिन्यनिवृत्तिद्वारा तद्विशिष्टपरमेश्वरगोचरपरभक्तिं जनयित्वा जन्माभावफलाय भवति। तस्मात् प्रादुर्भावापन्नगोचरत्वं परभक्तेः शब्दादेवावगम्यत इति ॥ ४७ ॥

## तच्च दिव्यं स्वशक्तिमात्रोद्भवात्॥ ४८॥

( गी०। अ०४। श्लो०९ ) जन्म कर्म च मे दिव्यमित्यत्र किं दिव्यत्वं न धर्मजत्वं धर्मयोगाभावात् तस्मिन्नदृष्टासिद्धेः। नापि दिविभवत्वं भूलोकजन्मन्यव्याप्तेः। किन्तु जीवशरीरवन्न भूतोपादानकत्वमपि तु स्वमायाशक्तिकृतत्वम्। अत एव मोक्षधर्मे नारदं प्रति भगवद्वाक्यम् ( महाभारते। शा०। अ०३४१।)

मायैषा हि मया सृष्टा यन्मां पश्यसि नारद। इति। तथा च गीयते ( गी०। अ०४। श्लो०६ )

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्।
प्रकृतिं स्वामधिष्ठाय सम्भवामि युगे युगे॥ इति।

न चाभौतिकत्वे शरीरत्वव्याघातः भोगायतने भौतिकत्वनियमात्। अथ भोगायतनत्वमेव शरीरत्वमिति चेन्न चेष्टाश्रयत्वस्य तत्त्वे लाघवात्। चेष्टात्वं तु क्रियागतो जातिविशेषः। नच क्रियैव चेष्टा मृतशरीरक्रियायां तद्व्यवहारापत्तेः। नापि साक्षात् प्रयत्नजक्रियात्वमेव चेष्टात्वं घटादावपि चेष्टत इति व्यवहृतिप्रसङ्गात्। सर्वक्रियायाः साक्षात् परमेश्वरयत्नजन्यत्वात्। एवं च परमेश्वरशरीरबोधकमानेन तच्छरीरचेष्टासिद्धिरित्यास्तां तावदिति। नच तत्त्वाधिक्यं तच्छरीरस्य ब्रह्माण्डानुपादानतया घटादिवदतत्त्वभावात् इन्द्रियाप्रकृतित्वाच्च ४८

ननु स्वतः प्रयोजनाभावे कथं प्रवर्तत इत्यपेक्षायामाह।

## मुख्यं तस्य हि कारुण्यम्॥ ४९॥

लोके हि निरुपाधिपरदुःखहानाय प्रवृत्तेषु कारुणिकव्यपदेशः। न चासौ तेषु मुख्यः कृपाजन्यदुःखहानाय पुण्यार्थं वाप्यन्ततः प्रवृत्तेर्न निरुपाधित्वं सम्भवति। नापि परदुःखप्रहाणमात्रप्रवृत्ते तथा धनाद्युपाधियुक्ते तद्व्यवहृतेः। किन्तु निरुपाधिपरक्लेशनाशिनो भगवत एव मुख्यं कारुण्यम्। तत्कृत एवान्यप्रयोजनार्थिषु कारुण्यव्यवहारो गौण

इति । तस्मात् जननीयादृष्टमपेक्ष्य स्वकारुण्यात् प्रवृत्तिरिति ॥ ४९ ॥

ननु ( गी०।अ०१०।श्लो०२७ ) नराणां च नराधिप इत्यादिना वैभूतीनामपि भगवद्रूपत्वकथनाद्राजादिभक्तेरपि मुक्तिः स्यादित्यत आह ।

प्राणित्वान्न विभूतिषु ॥ ५० ॥

जीवोपाध्यनवच्छिन्नविषयैव परा भक्तिर्न तु प्राणादिजीवोपाधियुक्तेषु राजादिषु रक्तिर्मुक्तिफलेति ॥ ५० ॥

द्यूतराजसेवयोः प्रतिषेधाच्च ॥ ५१ ॥

धर्मशास्त्रेषु द्यूतराजसेवयोः प्रतिषेधः स्मर्यते परमेश्वरत्वे तु तन्न स्यादिति ॥ ५१ ॥

वासुदेवेऽपीति चेन्नाकारमात्रत्वात् ॥ ५२ ॥

ननु ( गी०।अ०१०।श्लो०३७ ) वृष्णीनां वासुदेवोऽस्मीति विभूतिषु श्रुतिस्तथा च राजादिवत् सोऽप्यभजनीय एव स्यादिति चेन्न परब्रह्मण एव कृष्णाकारमात्रत्वात् । यथा पराशर आह । (विष्णुपु०। अंशे४।अ०११।श्लो०२ )

यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते ।
यत्रावतीर्णं विष्ण्वाख्यं परब्रह्म नराकृति ॥ इति ।

जीवत्वे तन्न स्यादिति ॥ ५२ ॥

प्रत्यभिज्ञानाच्च ॥ ५३ ॥

वासुदेवविषये परब्रह्मप्रत्यभिज्ञा च श्रूयते ( नारायणोपनि० । अथर्वशिरसि । दशके ६। वाक्य१ )

ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनः ।

'सर्वभूतस्थमेकं नारायणं कारणरूपमकारणं परब्रह्मस्वरूप'मिति स्मर्यते च प्रत्यभिज्ञा यथा प्रलये दृष्टानुभावेन युधिष्ठिरं प्रति मार्कण्डेयेनोक्तम् ( महाभारते ।वन०।अ०१८९।)

यः स देवो मया दृष्टः पुरा पद्मायतेक्षणः।
स एव पुरुषव्याघ्रः सम्बन्धी ते जनार्दन ॥ इति।

तथा (महाभार०।शां०।मोक्षधर्मे।अ० ३४५।
तपोभिरप्यदृश्यो हि भगवानिति श्रुत्वा जनमेजयेनाभिहितम्।

तपसाप्यसुदृश्यो हि भगवान् लोकपूजितः।
तं दृष्टवन्तस्ते साक्षात् श्रीवत्साङ्कविभूषणम् ॥ इति।

चकारात् तदङ्केषु फलस्मरणलिङ्गात् ॥ ५३ ॥

तर्हि कथं विभूतिषु तत्कीर्तनं तत्राह।

## वृष्णिषु श्रैष्ठ्येन तत् ॥ ५४ ॥

(गी०। अ० १०। श्लो० २१) आदित्यानामहं विष्णुरित्यादौ तेषु श्रेष्ठत्वं परमेश्वरस्यैवेति दृष्टिमात्रार्थं विभूतिकथनं तच्च वासुदेवेऽपि वृष्णिषु श्रेष्ठोऽयमित्येतावन्मात्रदृष्टिविधानार्थं विभूतिषु वासुदेवकीर्तनमिति ॥ ५४ ॥

## एवं प्रसिद्धेषु च ॥ ५५ ॥

एवमनेन प्रकारेण वासुदेववद्ब्रह्मलिङ्गवत्तया प्रसिद्धेषु वराहनृसिंहवामनरामभद्रादिषु भक्तिरपि मुक्तिफलेति बोध्यम्। यद्वा एवं ब्रह्मलिङ्गवत्तया प्रसिद्धेषु [गी०। अ० १०। श्लो० २३] रुद्राणां शङ्करश्चास्मीत्यादिविभूत्यात्मसु श्रैष्ठ्यमात्रदृष्टिर्मन्तव्या। उक्तं हि स्कान्दे ।काशीखं०। पूर्वभा०। अ० २७। श्लो० १८१]

विष्णुरुद्रान्तरं ब्रूयाद्यः श्रीगौर्यन्तरं तथा।
तद्भ्रान्तिकस्य मूर्खस्य वाक्यं शास्त्रविगर्हितम् ॥ इति।

शङ्करस्य ब्रह्मलिङ्गप्रसिद्धिः स्मृत्यादौ बहुलमुपलभ्यत इति ॥५५॥

इत्याचार्यस्वप्नेश्वरविद्वद्वरविरचिते शाण्डिल्यशतसूत्रीयभाष्ये द्वितीयाध्यायस्य प्रथममाह्निकम् ॥

---

उक्तौ दृष्टोपकारकौ ज्ञानयोगौ सम्प्रति प्रतिबन्धकदुरितक्षयमुखेनापवर्गवत्यो गौणभक्तय उच्यन्ते।

**भक्त्या भजनोपसंहाराद्गौण्या परायैतद्धेतुत्वात्॥ ५६॥**

[ गी०। अ०। श्लो० १३ ]

भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्।

इत्यनेन सप्तमाध्यायप्रतिपादितपरभक्तिमनूद्य तत्पश्चाद्गीतं ( गी० अ०९। श्लो०१४ )

सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते॥ १॥

इत्यादि। तत्पश्चात् [ गी० अ०९। श्लो०२९ ]

ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्। इति

तदुपसंहारस्ततस्तत्र [ तैत्तिरीयसं०।अष्ट०२। प्र०४। अनु०६ ] चित्रया जयेतेतिवत् सामानाधिकरण्येन भक्तिनाम्ना भजनेन फलं भावयेदित्यर्थः। [ गी०। अ०७। श्लो०१७ ] एकभक्तिर्विशिष्यते इत्यादौ भगवद्भक्तौ भक्तिशब्दस्य प्रयुक्तत्वेन संज्ञाप्राप्तेः भक्तिभजनयोरेकार्थत्वाच्च। नाप्यत्र परभक्तिः फलभावनया विधीयते तस्या अकृतिसाध्यत्वेनाविधेयत्वात्। न चापि तस्या निःश्रेयसहेतुत्वमज्ञातं ज्ञाप्यते ( गी०। अ०७। श्लो०२३ ) मद्भक्ता यान्ति मामपीत्यादिना सप्तम एव तज्ज्ञापनस्यापि प्राप्तत्वात्। किन्तु परभक्तेर्विघ्ननाशनसाधनाकाङ्क्षया कीर्तनादिकमेवोपक्रान्तं भक्तिशब्देन गौण्या वृत्त्या तृतीयान्तेन निर्दिश्य परभजनसाधनत्वं तेषु विधीयते इत्यत्रार्थवादाकाङ्क्षायां ( गी०। अ०९। श्लो०२९ ) मयि ते तेषु चाप्यहमिति पश्चादन्वयः। अन्यथा भक्त्या भजनं तेन च मयि स्थितिरिति वाक्यं भिद्येत। कीर्तनादिषु भक्तिसाधनत्वेन [ तैत्तिरीयसं०। अष्ट०२। प्र०३। अनु०२ ] 'आयुर्वै घृत'मितिवद्भक्तिशब्दो गौणः शक्यसंस्कारेण

सुग्रह इति। यद्वा भज्यते एभिरिति व्युत्पत्त्या तासु भक्तिशब्दः [आश्वलायनश्रौतसू०। अ०१। खं०८] 'उद्भिद्वत्'। अथवा (गी०। अ० ७।श्लो०१६] चतुर्विधा भजन्ते मामिति भजनगणपाठात् सृष्टिवत्। [गी०। अ०७। श्लो०१८] उदाराः सर्व एवैते इत्यौदार्यगुणयोगाद्वा गौणत्वमिति ॥ ५६ ॥

रागार्थप्रकीर्त्तिसाहचर्याच्चेतरेषाम् ॥ ५७॥

एवं हि श्रुतम् [गी०। अ.११। श्लो.३६]

स्थाने हृषीकेश तव प्रकीर्त्या

जगत् प्रहृष्यत्यनुरज्यते च। इति।

तत्र साक्षादेवानुरागार्थत्वं कीर्तनस्य श्रुतम। तत्साहचर्यात् [गी०। अ० ९। श्लो० १४]

सततं कीर्ययन्तो मां यतन्तश्च दृढव्रताः।

इत्यादिनोक्तानामपि तदेव फलमिति ॥ ५७ ॥

अन्तराले तु शेषाः स्युरुपास्यादौ च काण्डत्वात् ॥५८॥

(गी०। अ० ९। श्लो० १३)

भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्।

(गी०। अ० ९। श्लो० २३)

ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्।

इत्येतयोरन्तराले या गौणभक्तयः श्रुतास्ताः परभक्त्यङ्गानि भवन्ति परभक्तिसन्देशादेवेति भावः। ता यथा (गीता०। अ० ९। श्लो० १४। १५। २२। २५। २६। २७। २८)

सततं कीर्ययन्तो मां यतन्तश्च दृढव्रताः।

नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥

ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते।

एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ इति। तथा।

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्॥ इति। तथा।
यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम्॥ इति
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः॥ इति। तथा
यत् करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत् तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम्॥
शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः। इति।

तत्र नाम्नामभिधानं कीर्तनम्। भक्त्यर्थं यत्नश्चात्र लौकिकोऽप्यङ्गताप्रस्तावादुक्तः। दृढव्रतत्वं मद्भक्त्यैकादश्युपवासाद्यनुष्ठानम्। नमस्कारः स्वापकर्षबोधककरशिरःसंयोगादिव्यापारः। ज्ञानयज्ञश्च द्विधा मुख्यामुख्यभेदेन एकत्वपृथक्त्वविषयतया। तन्मात्रचिन्ता तु ध्यानमनुस्मृतिश्च। यागः पूजा भगवन्तमुद्दिश्य पत्रादिदानञ्च तथा विहितनिषिद्धसर्वकर्मणां परमेश्वरे समर्पणमिति। न केवलमेतान्येवाङ्गानि। किन्तु मनो ब्रह्मेत्युपासीत (गी०।अ०१०।श्लो०२१) आदित्यानामहं विष्णुरित्याद्युपासनादिशब्दकवलीकृतान्यपि भक्तिसाधनानि कुतः ब्रह्मकाण्डस्य सर्वस्यापि भक्तितत्साधनप्रतिपादकत्वादिति॥ ५८॥

ताभ्यः पावित्र्यमुपक्रमात्॥ ५९॥

ताभ्यो गौणभक्तिभ्यः पावित्र्यमन्तःकरणमालिन्यहेतुदुरितक्षयः स एव द्वारं कुतः [गी० अ० ९। श्लो० २] पवित्रमिदमुत्तममित्युपक्रम्याभिधानात्। भक्तेरन्तःकरणधर्मत्वात् पावित्र्यस्यान्तरङ्गत्वादिति॥ ५९॥

## तासु प्रधानयोगात् फलाधिक्यमेके ॥ ६० ॥

तास्वेव कीर्त्तनादिषु [ गी०। अ० ९। श्लो० २६ ] यो मे भक्त्या प्रयच्छति [ गी०। अ० ९। श्लो० १४ ] नमस्यन्तश्च मां भक्त्या इत्यादौ प्रकरणादिसिद्धाङ्गभावेषु पुनर्भक्तिसंयोगकथनं प्रवृत्तभक्तीनां तदनुष्ठाने फलाधिक्यार्थमेवेत्येक आचार्या मन्यन्ते ॥ ६० ॥

## नाम्नेति जैमिनिः सम्भवात् ॥ ६१ ॥

जैमिनिराचार्यस्तु तासु गौणत्वसिद्धेः [ आश्वलायनश्रौत सू० उ० ९। खं० ७ ] 'श्येनेनाभिचरन् यजेते'त्यादाविव भक्त्या कीर्त्तनेन भक्त्या दानेन परभक्तिं साधयेदिति सामानाधिकरण्यसम्भवान्नामभावेनान्यार्थं तां मन्यते न फलान्तरार्थं गौरवादिति ॥ ६१ ॥

## अत्राङ्गप्रयोगानां यथाकालसम्भवो गृहादिवत् ॥ ६२ ॥

कीर्त्तननमस्यादीनां सहानुष्ठानमेकैकेन वा क्रमेण वानुष्ठानमिति त्रयः पक्षाः। तत्राद्ये कस्यचिदननुष्ठानेऽप्यन्येषां निःफलत्वप्रसङ्गः द्वितीये विकल्पप्राप्तावर्थैक्यनियमः स्यात्। तृतीयस्त्वशास्त्रार्थः। एककृतावन्यस्याननुष्ठानं च प्रसज्यते गौरवात्। तस्मादेतेषां मिथो व्यभिचारहेतुत्वमिति पूर्वपक्षः। सिद्धान्तस्तु सर्वाण्येव साधनानि प्रमाणसत्त्वात्। किन्तु सहानुष्ठाननियमो नास्ति प्रमाणाभावात्। येषां तु गन्धपुष्पधूपदीपनैवेद्यादीनामेकप्रयोगश्रवणं तेषामेव सहानुष्ठानम्। तदितरेषां तु यथाकालं यथासम्भवमनुष्ठानं गृहकृत्यादाविव यथा गृहसाधनतृणस्तम्भाद्याहरणं कदाचिदेकदा कदाचित् क्रमश इति नह्येतावता तृणादीनामकारणत्वमायाति। तस्मात् यद्यादृशदुरितक्षयसमर्थं तत् तादृशदुरितक्षयं कृत्वा सर्वैः स्वस्वसामर्थ्ये दर्शिते परभक्तिसिद्धिरिति तथा च गीयते ( गी०।अ०७।श्लो०१९ )।

बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यत इति ॥ ६२ ॥

## ईश्वरतुष्टेरेकोऽपि बली ॥ ६३ ॥

तेषु मध्ये यः कश्चिदतिशयानुष्ठानेन बलवान् भवति स एकोऽपि परमेश्वरतुष्टिं जनयित्वा परभक्तये प्रभवति बहुतरशिथिलपरिचर्याभिरपि यथा नेतरः प्रभुस्तुष्यति तुष्यति चैकेनापि निर्व्यलीकसततकृतपादसंवाहनेन तद्वत्। कीर्तनाद्यन्यतमेनापि दृढतरसेवितेन भगवत्प्रसादाद्भक्तिः प्राप्यते यथा ( गी०।अ०१८।श्लो०५७ )।

बुद्धियोगं समाश्रित्य मच्चित्तः सततं भव।
मच्चित्तः सर्वदुर्गाणि मत्प्रसादात् तरिष्यसि ॥ इत्यादि।

तथा कालादिकृतमपि कस्यचिद्बलम्। यथा ( ब्रह्मपु०अ०९७। श्लो०१६६ )।

ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन्।
यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम ॥

इत्यादिकम्। नच व्यभिचारो बलवत्प्रत्येकजन्यभक्तिं प्रति कीर्त्तनत्वादिना हेतुत्वादिति ॥ ६३ ॥

ननु कीर्त्तनाद्यान्तरालिकानां सर्वेषामेव पावित्र्यं द्वारमुत केषाञ्चिदन्यदपीत्यत आह।

## अबन्धोऽर्पणस्य मुखम् ॥ ६४ ॥

भगवत्यर्पितशुभाशुभकर्मणां स्वफलाजननलक्षणबन्धाभाव एव द्वारम्। यथोक्तम् [ गी०। अ०९। श्लो०२८ ]।

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैरिति।

अर्पणमन्त्रोऽपि पुराणान्तरे।

कामतोऽकामतो वापि यत् करोमि शुभाशुभम्।
तत् सर्वं त्वयि संन्यस्तं त्वत्प्रयुक्तः करोम्यहम ॥ इति।

न चैवं स्वातन्त्र्यप्रसङ्गः तत्करणबलेन पापाचरणाभावस्यापि तदङ्गत्वात्। यथा स्मृतिः।

न वेदबलमाश्रित्य पापाकर्मरतिर्भवेत्॥ इति।

तस्मात् पावित्र्यं तदितरविषयमेवेति। अत्र शुभं कर्म स्वाश्रमविहितनित्यनैमित्तिकात्मकं बोध्यम्। सम्यगाश्रमपरिपालनाद्ब्रह्मलोकादिफलं तत्प्राप्तौ मुक्तये विलम्बः स्यादित्यादिबन्धः। ब्रह्मण्यर्पिते तु तत्प्रसिद्धिः। एवं कामाज्ञानकृतकाम्यकर्मपापयोरपि पश्चादर्पणे फलाभाव एव इति॥ ६४॥

अथ गौणीष्वेव विशेषश्चिन्त्यते तत्र श्रुतिस्मृतिमध्ये यत्स्वरूपमुच्यते यथा [छां०।] य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश इत्यादि। तथा [नारदपञ्चरात्रे। पटले ११। श्लो० ७१]।

ध्येयः सदा सवितृमण्डलमध्यवर्ती।
नारायणः सरसिजासनसन्निविष्टः॥
केयूरवान् मकरकुण्डलवान् किरीटी।
हारी हिरण्मयवपुर्धृतशङ्खचक्रः॥ १॥

इत्येवमादि। तत्र किमेवंविधेष्वेव ध्याननियमः पूर्णप्रादुर्भावादौ वा यथाश्रुतेष्विति। तत्र ध्येयस्वरूपश्रवणान्नियमप्राप्तावुच्यते।

## ध्याननियमस्तु दृष्टसौकर्यात्॥ ६५॥

ध्याने ध्येयनियमकथनं दृष्टार्थं नानाविषयत्वे चित्तविक्षेपसम्भवात्। तस्मात् सौकर्यार्थमेव तत्कथनं ज्ञेयम्। अदृष्टार्थत्वे विकल्पादिप्रसङ्गात्। तस्माद्यथाश्रुतेषु व्यवस्था। अत एव गोपीनां शिशुपालादेश्च तन्नियममन्तरेणैव ध्यानस्य दुर्लभं फलमुपलब्धमिति॥६५॥

## तद्यजिः पूजायामितरेषां नैवम्॥ ६६॥

(गी०। अ० ९। श्लो० २५) यान्ति मद्याजिनोऽपि मामित्यत्र यजिः किं प्रसिद्धज्योतिष्टोमादिविषयः किं वा पूजावचन इति। तन्नायं यजिः पूजायामेव प्रयुक्तः कुतो ज्ञायते विष्णुं पूजयेदित्यादिना

नित्यकाम्यपूजा तादर्थ्ये विहिता तस्याः परभक्त्यङ्गत्वमात्रमत्र विधीयते तेन तादर्थ्यं इतरयोगानां तु नतादर्थ्यं श्रुतं तेषामीश्वरोद्देश्यकत्वं भक्तिसंयोगश्चोभयं विधातव्यमिति वाक्यभेदः स्यात्। अथ विष्णवे उरुक्रमाय सूते चरुमित्यादिविहितस्य भक्तिसंयोगोऽस्त्विति चेत् सत्यम्। काम्यानां तत्फलेनैव निराकाङ्क्षत्वात्। जीवनमात्रनिमित्तकनित्यपूजायास्तु भक्तिसंयोगविधौ बाधकाभावात् नित्यत्वे सततोपस्थितिलाघवाच्चेति। अत एव मोक्षधर्मे हिंसायुक्तधर्मनिन्दायाम्। [ महाभारत० । शां० ।अ० २६५। ]

सर्वकर्मस्वहिंसां हि धर्मात्मा मनुरब्रवीत्।
कामरागा हि हिंसन्ति बहिर्वेद्यां पशून् नराः॥
विष्णुं ये चाभिजानन्ति धर्मादेव यजन्ति ते।
पायसैः सुमनोभिश्च तथापि यजनं स्मृतम्॥ ६६॥ इति।

अथ पूजाप्रस्तावादधिकरणत्रयम्।

## पादोदकं तु पाद्यमव्याप्तेः ॥ ६७॥

एवं स्मर्यते। [ नृसिंह पु । अ० ५९। श्लो० ४६ ]

गङ्गाप्रयागगयपुष्करनैमिषाणि।
पुण्यानि यानि कुरुजाङ्गलयामुनानि॥
कालेन तीर्थसलिलानि पुनन्ति पापान्।
पादोदकं भगवतः प्रपुनाति सद्यः॥ १॥

इत्यत्र। तत् किं पादसंयुक्तं जलं पादोदकमुत पादे दत्तकोत्सृष्टं जलम्। तत्र पाद्यमेव पादोदकं कुतो ज्ञायते अन्यथाऽव्याप्तिप्रसङ्गात्। तथाहि भगवतः साक्षात्पादसम्बन्धो न सम्भवति। नाप्यवतारद्वारा तस्याप्यनुष्ठातृसन्निधानासम्भवात्। किन्तु पूजाधिष्ठानप्रतिमापादसम्बन्धादुपचारस्तत्रापि प्रतिष्ठितायाः अप्रतिष्ठितायास्तु पूजार्थमावाहने सति तथा च शालिग्रामशिलाद्यधिष्ठाने पादाभावे तन्न स्यात्।

तत्रैवं व्याप्त्यनुरोधात् पाद्यमेवास्तु प्रतिमाद्यत्यन्तव्यवहितसम्बन्धक-ल्पनाप्रसङ्गात् ॥ ६७ ॥

## स्वयमर्पितं ग्राह्यमविशेषात् ॥ ६८ ॥

पूजायां भगवते दत्तं नैवेद्यनिर्माल्यादिकं वैष्णवं सात्वतेभ्य इत्या-दिना प्रतिपाद्यत्वेन विहितं तदिह सात्वतत्वाविशेषादेव भगवद्भक्ते-न स्वयमपि ग्राह्यं भोजनधारणादिना स्वोपकार्यमित्यर्थः। स्वयमपि ग्रहणे प्रतिपत्तिः सिध्यति। धर्मशाख्यं तु वर्जनीयमेव यथा अग्न्या-द्युद्देशेन त्यक्तपुरोडाशस्यापि उत्तरार्द्धात् स्विष्टकृतमवद्यति यजमान-पञ्चमाः पुरोडाशं भक्षयन्तीति प्रत्तिपतिस्तथेदमपि वचनादेव। अ-न्यथा सात्वतेभ्योऽपि न प्रतिपादयेत् परद्रव्यत्वात्। वचनादिति चे-न्न . नहि वचने स्ववर्जनमुक्तम् । अथ ब्राह्मणेभ्यो दद्यादित्यादिना ब्राह्मणत्वादात्मनेऽपि दानप्रसङ्गादिति चेन्न दानस्य स्वस्वत्वध्वंसेन परस्वत्वापादानुरूपत्वात् । नचैवं प्रतिपत्तौ युक्तं पुरोडाशस्यापि यजमाने प्रतिपत्तिदर्शनात् क्रयादिवत् प्रतिपत्तिरपि स्वत्वापादिकैव। तदेवं यत्रान्यसात्वताऽसंपत्तिस्तत्र स्वयं ग्रहणेनाप्यवैगुण्यं परिहार्य-मेव। तथा स्वयं दत्तपाद्यादिधारणेऽपि ज्ञेयमिति । किञ्च (गी०। अ० ३। श्लो० १२) 'तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेनएव स' इत्यत्र समानकर्तृकत्वात् स्वत्वध्वंसे समानकर्मत्वप्रतीतेः। क्त्वासमभिव्याहृ-तनञः सामाधिकरण्येनान्वयात् तैर्दत्तानित्यत्र तज्जातीयपरत्वे माना-भावात्। तस्माद्बाधकं विना देवेभ्यो दत्तमपि भोक्तव्यमिति ध्येयम् ६८

## निमित्तगुणाव्यपेक्षणादपराधेषु व्यवस्था ॥ ६९ ॥

[ वराहपुराणे। अ०१२४ श्लो०४ ] देवपूजापराधास्ते द्वात्रिंशत् परिकीर्त्तिताः। इत्युपक्रम्य द्वात्रिंशापराधास्तत्तत्प्रायश्चित्तानि च वि-हितानि तत्र किं सर्वापराधवर्जनं पूजाङ्गमुत केषांचिद्वर्जनमङ्गं के-षांचित् पुरुषार्थ इति । अत्रोच्यते ( वराहपु०।अ०१२४।श्लो०६५)

अकर्मण्येन पुष्पेण यो मामर्चयते नरः ।

पतनं तस्य वक्ष्यामि तच्छृणुष्व वसुन्धरे ॥ १ ॥ इत्यादि ।

तत्राकर्मण्यानां पुष्पाणां पर्युदस्तत्वान्न पूजाङ्गत्वम् । किन्तु पूजाक्रमप्रयोगमध्ये भ्रमादिनार्पणे कृते तन्निमित्तमपेक्ष्य प्रायश्चित्तम् । यत्र तु ( वराहपु० अ० २५।श्लो० ३६ ) अदत्वा गन्धमाल्यानि धूपं यो मे प्रयच्छतीत्यनेन पूजाक्रमभङ्गापराधे तत्तत्क्रमस्य पूजाङ्गत्वादङ्गवैगुण्यपरिहारात् तत्प्रायश्चित्तस्याङ्गत्वं द्रष्टव्यम् । यत्र पूजामन्तरेण ( वराहपु०।अ० १२५।श्लो० १) दन्तकाष्ठमखादित्वा यस्तु मामुपसमुर्पतीत्यादि श्रुतं तत्र व्यक्तमेव पुरुषार्थत्वमिति व्यवस्थैवेति ॥ ६९ ॥

एवं पूजाया भक्तिसंयोगसिद्धौ ( गी० अ० ९।श्लो० २६ ) पत्रं पुष्पं फलं तोयमित्यनेन भगवदुद्देश्यकदानमात्रस्य भक्त्यङ्गत्वविधिरित्याह ।

## पत्रादेर्दानमन्यथा हि वैशिष्ट्यम् ॥ ७० ॥

यद्यदिष्टतमं लोके यच्चान्यद्दयितं गृहे ।

तत् तद्धि देयं प्रीत्यर्थं देवदेवाय चक्रिणे ॥

इत्यादिना प्राप्तस्य भगवदुद्देश्यकसर्वदानस्य भक्त्यङ्गत्वविधिः । अन्यथा पत्रादिचतुष्टयविशिष्टदानमेव स्यात् । प्रत्येकविधौ वाक्यभेदः । तस्मात् पत्रादिशब्देन प्राप्तं दानमनूद्य ( तैत्तिरीय सं० ) 'उपव्ययत' इत्यनेन नित्योपवीतस्य दर्शाङ्गत्ववदङ्गत्वविधिरेव युक्त इति ७०

## सुकृतजत्वात् परहेतुभावाच्च क्रियासु श्रेयस्यः ॥ ७१ ॥

ता भक्तयः सर्वकर्मसु श्रेयस्य एव कुतः परभक्तिहेतुत्वात् इतरधर्मजन्यत्वाच्च यथा ( गी० अ० ४।श्लो० १०।११ ) •

बहवो ज्ञानतपसा पूता मद्भावमागताः ।

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ॥ इति ।

भावशब्दश्च भक्तौ प्रयुक्तः ।

गङ्गाजले किं न वसन्ति मत्स्याः ।
देवालये पक्षिगणा वसन्ति ॥
भावोज्झितास्ते न फलं लभन्ते ।
तीर्थाच्च देवायतनाच्च मुख्यात् ॥ इत्यादौ ।

तथा ( गी०अ०७।श्लो०१६ )

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ॥ इति ।

अत्र पूर्वसुकृतजत्वाद्भक्तीनां तास्तेभ्यो मुख्याः एतेन भक्तिमीमांसायां विचारो युज्यते न कर्ममीमांसायामित्युक्तम् ॥ ७१ ॥

ननु भक्तानां न गौणमुख्यभावस्तथा सति (गी०।अ०७।श्लो०१६ )

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ इति ।

चतुर्णां तुल्यवदभिधानं किं कृतमित्यत आह ।

## गौणं त्रैविध्यमितरेण स्तुत्यर्थत्वात् साहचर्यम् ॥ ७२ ॥

गौणं त्रैविध्यमेव तासां मुख्येन साहचर्य्यश्रवणं तु स्तुत्यर्थम् । यथा राजसमभिव्याहारेणामात्यानाम् । एवञ्च पापक्षयविपदुद्धारादिनिमित्तं स्मरणकीर्तनाद्यार्त्तभक्तिः ज्ञानार्थं यज्ञाद्याचरणं जिज्ञासोर्भक्तिः । यथा च ( वृहदा० ) 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने'त्यादि । तथा ( गी०। अ० १८। श्लो० ४८ )

स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दन्ति मानवाः ।

विष्णुपु० । अं० ३ । अ० ७ । श्लो० १६ ]

न चलति निजवर्णधर्मतो यः ।
सममतिरात्मसुहृद्विपक्षपक्षे ॥
न हरति नच हन्ति किञ्चिदुच्चैः ।
स्थितमनसं तमवेहि विष्णुभक्तम् ॥

इत्यनेन स्वस्ववर्णाश्रमविहितवेदानुवचनादीनां ज्ञानार्थमनुष्ठानं जिज्ञासा भक्तिः। अर्थार्थिता भक्तिरपि द्विधा तत्रैका परभक्त्यर्थं क्रियमाणा पूर्वोक्ता राज्यस्वर्गाद्यर्थं क्रियमाणा च कीर्त्तनादिरूपाऽपरा। यथा [ विष्णुपु०। अं० १। अ० ७। श्लो० ३ ]

भौमान् मनोरथान् कामान् स्वर्गिवन्द्यं परं पदम्।
प्राप्नोत्याराधिते विष्णौ निर्वाणमपि चोत्तमम्॥ इति।

तत्र निर्वाणप्राप्तिः परभक्तिद्वारेति परभक्तिप्रयोजनार्थिता (गी०। अ० ९।श्लो० २९) ये भजन्ति च मां भक्त्या मयि ते तेषु चाप्यहमित्यनेनसहैकवाक्यत्वात्। यच्च भागवते (स्कन्ध ७। अ० ५। श्लो० २२।२३)

श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥
इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा। इति।

तदेतेष्वेव यथायथमन्तर्भावनीयम् तदेवमुपाधीनामेषामुपधेयसाङ्कर्येऽपि न दोष इति॥ ७२॥

ननु कीर्त्तनादीनामङ्गत्वे कथमार्त्यादिषु प्राधान्यं घटते इत्यपेक्षायामुच्यते।

## बहिरन्तरस्थमुभयमवेष्टिसववत्॥ ७३॥

स्मरणकीर्त्तनादीनां परभक्त्यङ्गतया तदन्तर्गतत्वमनारभ्य फलान्तरश्रवणात् तद्बहिर्भावेनोत्कर्षोऽपि। यथा राजसूयान्तर्गताप्यवेष्टिः प्रधानापि अनारभ्य फलान्तरसम्बन्धात् तत उत्कृष्यते। यथा वा बृहस्पतिसवः क्वचित् प्रधानमपि वाजपेयाङ्गं तद्वत् प्रमाणसत्त्वसत्त्वाभ्यां विशेषात्। एवं

प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः॥

इत्यनेन सर्वकर्मणां नैमित्तिकाङ्गत्वेनापि प्रवृत्तेः । स्वभावाङ्गत्वं स्वर्गादिफलाय प्राधान्यं च न विरुद्धमिति ॥ ७३ ॥

इदानीमार्त्तभक्तौ विशेषश्चिन्त्यते ।

## स्मृतिकीर्त्त्योः कथादेश्चार्तौ प्रायश्चित्तभावात् ॥ ७४ ॥

स्मरणकीर्त्तनकथानमस्कारादीनामार्त्तभक्तौ निवेशस्तत्तत्पापकृत-नरकार्त्तिमतां तत्तत्पापक्षयहेतुत्वेन कथनात् यथा [ विष्णुपु०। अं० २। अ० ६। श्लो० ३२।३३ ]

प्रापे गुरूणि गुरुणि लघूनि च लघुन्यपि ।
प्रायश्चित्तानि मैत्रेय जगुः स्वायंभुवादयः ॥ १ ॥
प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥ २ ॥

तथा ( विष्णुपु०। अं० ६। अ० ७। श्लो० ९ )

यन्नामकीर्त्तनं भक्त्या विलापनमनुत्तमम् ।
मैत्रेयाशेषपापानां धातूनामिव पावकः ॥

एवं [ महाभार०। शां० । मोक्षध० । अ० ३४५ । ]

सर्वाश्रमाभिगमनं सर्वतीर्थावगाहनम् ।
न तथा फलदं सौते नारायणकथा यथा ॥
पाविताङ्गाः स्म संवृत्ताः श्रुत्वेमामादितः कथाम् ।
नारायणाश्रयां पुण्यां सर्वपापप्रणाशिनीम् ॥ इत्यादि ।

तस्मायुक्तमार्त्तौ निवेशनमिति ॥ ७४ ॥

## भूयसामननुष्ठितिरिति चेदाप्रयाणमुपसंहारान्महत्स्वपि ॥ ७५ ॥

स्यादेतत् न्यायविरोधादेतद्वचनानां स्वल्पपापविषयत्वमेव युक्तम् । अन्यथा भूयः क्लेशसाध्यानामननुष्ठानलक्षणमप्रामाण्यमिति चेन्न

तेषामामरणमुपसंहारस्मरणात् क्लेशाधिक्यात्। यथा (विष्णुपु०। अं० २। अ० ६। श्लो० ३९)

तस्मादहर्निशं विष्णुं संस्मरन् पुरुषो मुने।
न याति नरकं शुद्धः संक्षीणाखिलकल्मषः॥

इत्यनेन सातत्योपसंहारात् उपक्रमोपसंहारयोरेकार्थत्वादिति भावः। न चोपक्रमे कालः श्रूयते येन तद्विरोधादुपसंहारस्य भिन्नार्थतापि भवेत्। तथा च क्लेशसाम्यादितरेषां नाननुष्ठानमप्रामाण्यम् (विष्णुपु०। अं० २। अ० ६ श्लो० ३५) प्रातर्निशि तथा सन्ध्यामध्याह्नादिषु संस्मरन् इत्येतदवगुत्यानुवाद एव। नाप्यनुतप्ताधिकारिकमिदम्। (विष्णुपु०। अं० २। अ० ६। श्लो० ३४)

कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते।
प्रायश्चित्तं तु तस्यैकं हरिसंस्मरणं परम्॥

इत्यस्यापि सर्वप्रायश्चित्ताङ्गानुतापस्यानुवादत्वादेकमित्यस्यापि प्रायश्चितान्तरनैरपेक्ष्यस्य न्यायप्राप्तस्यानुवादः। अन्यथा वाक्यानि भिद्येरन् विशिष्टविषयाश्च भवेयुः। अतो यच्छब्दान्तर्गतत्वाद्यथायथमनुवादत्वान्नार्थवादत्वं पूर्ववाक्यानाम्। अत एवान्यत्रापि (विष्णुपु०। अं० ३। अ० ७। श्लो० ३४।३५)

किङ्करा दण्डपाशौ वा न यमो न च यातनाः।
समर्थास्तस्य यस्यात्मा केशवालम्बनः सदा॥
चक्रायुधस्य नामानि सदा सर्वत्र कीर्त्तयेत्।
नाशौचं विद्यते तस्य स पवित्रकरो यतः॥

इत्यादिभिः सातत्यमुक्तमिति॥ ७५॥

**लध्वपि भक्ताधिकारे महत्क्षेपकमपरसर्वहानात् ॥७६॥**

लध्वपि सकृत्स्मरणकीर्त्तनादि महतामपि पापानां क्षेपकं नाशकं भवति। यतो भक्ताधिकारे प्रायश्चितान्तराणां सर्वेषां त्यागलक्षणहा-

निप्रतीतेरित्यर्थः। यथा गीतम् ( गी० । अ० १८ । श्लो० ६६ )

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि माशुचः॥ इति।

अत्र हि न काम्यकर्मत्यागपूर्वकत्वमर्थः काम्यत्यागे पापाभावात् किं भगवता मोक्षणीयम्। अथ पापान्तरं नाश्यं काम्यत्यागस्यादृष्टार्थत्वापत्तेः नित्यनैमित्तिकयोरपि त्यागपूर्वकता न तस्यार्थः तयोस्त्यागे यदि विधिरस्ति न ततः पापं किं मोक्षणीयम्। अथ नास्तीति वाच्यम्। मैवम्। एवं वाक्येनैव तद्विधानात् पापाजनकत्वात्। अथ सर्वधर्मान् परित्यज्येत्यनेन संन्यासिनमनूद्य तदधिकारिकमिदं तेषामवकीर्णादिप्रायश्चित्तादिस्मरणात् तैः सह विकल्पप्रसङ्गात् पूर्ववन्महतामननुष्ठानं च स्यात्। न च सातत्येन तद्दोषपरिहारः।

महापातकयुक्तोऽपि ध्यायन्निमिषमच्युतम्।
पुनस्तपस्वी भवति पंक्तिपावनपावनः॥

इत्यादिना लघुनोऽपि महत्क्षेपकत्वात्। किञ्च संन्यासाश्रमस्यासन्निधानेन बुद्ध्यनारोहात्। तस्माद्यथा लोके सर्वान् विहाय मां भज क्लेशांस्ते नाशयिष्यामीत्यत्र क्लेशनाशकान्तरहानिः प्रतीयते। तथान्तरपापनाशकान्तरत्यागोऽवगम्यते वाक्यादेव। एतेन कथं चित्संन्यासविधायकेन सहैकाध्यायपाठेऽपि न तद्विषयकत्वं प्रकरणसन्निधानयोः सबलत्वात्। किञ्चास्मिन्नध्याये। ( गी० । अ० १८ । श्लो० २) काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुरित्यादिना काम्यकर्मत्याग एवोक्तो न संन्यासाश्रमः एवञ्च प्रायश्चितान्तरत्यागसङ्कल्पेन केवलभगवन्नामादिभिरार्त्तिं यस्तर्त्तुमिच्छति तदधिकारिकमेव सकृत्स्मरणादि तथा च भिन्नाधिकाराद्दूषणानां समुच्चितिः। नापि क्लेशभयाद्भूयसामननुष्ठानम्। ( गी० अ० १८। श्लो० ८ )

दुःखमित्येव यत् कर्म कायक्लेशभयात् त्यजेत्।

स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥

इत्यनेन तादृशसंन्यासस्य हेयत्वात् । ( विष्णुपु० । अं० ६ । अ० ७ । श्लो० १० )

कलिकल्मषमत्युग्रं नरकार्त्तिप्रदं नृणाम् ।
प्रयाति विलयं सद्यः सकृद्यत्रानुसंस्मृते ॥ इत्यादि ।

तदधिकारपरम् । एवम् ( गी० । अ० ९ । श्लो० ३० । ३१ )

अपि चेत् सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥
क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं नियच्छति ।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥

इत्यनेन तथा ( नृसिंहपु० । अ० ८ । श्लो० २८ । २९ )

नारकाः कृष्णकृष्णेति नारसिंहेति चुक्रुशुः ।
इति संकीर्त्तितो विष्णुर्नारकैर्भक्तिपूर्वकम् ।
नारक्यो यातनाः सर्वास्तेषां नष्टा महात्मनाम् ॥

इत्यादिना च भक्त्यधिकारः सुव्यक्त इति । अत्र कीर्तनस्योच्चारणत्वमात्रमिह प्रतीतम् । नतु प्रथमान्तपदेनेत्यादिनियम इति ॥७६॥

## तत्स्थानत्वादनन्यधर्मः खले वालीवत् ॥ ७७ ॥

( विष्णुपु०।अं०२। अ० ६ । श्लो० ३४ ) प्रायश्चित्तं तु तस्यैकं हरिसंस्मरणं परमित्यादौ नामाऽतिदेशेन प्रायश्चित्तान्तरधर्मस्तु न मन्तव्यः । प्रायश्चित्तस्थानत्वात् तत्स्थाने तद्विधानादित्यर्थः । यथा(आश्वलायनश्रौतसू० । अ० ९ । खं० ७) 'खले वाली यूपो भवती'त्यत्र पशुनियोजने यूपकार्ये खले वालीविधिरिति । यूपधर्मस्याष्टाश्रिकरणादेः प्रसङ्गस्तद्वदत्र नखलोमादिवपनानां प्रायश्चित्तधर्माणामप्राप्तिरिति । न कीर्तनादेरपि पापक्षयहेतुत्वात् प्रायश्चित्तमेवेति वाच्यम् ।

प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते ।

तयोर्निश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम् ॥

इत्यनेन तपोरूपे प्रायश्चित्तशब्दो मुख्यः अन्यत्र गौण इति ध्येयम् ॥ ७७ ॥

अथाङ्गानां प्रधानाधिकरणनैयत्यात् तदधिकारश्चिन्त्यते।

## आनिन्द्ययोन्यधिक्रियते पारम्पर्यात् सामान्यवत्॥ ७८

निन्दितचाण्डालादियोनिपर्यन्तं भक्तावधिक्रियते संसारदुःखजिहासाया अविशेषात्। अथ वेदाध्ययनानधिकारात् कथमत्र त्रैवर्णिकानां स इति चेत् तत्राह पारम्पर्यादिति। ( पूर्वमीमांसासू०। अ०१। पा० १। सू०२ ) 'चोदनालक्षणोऽर्थो धर्मः ( उत्तरमीमांसासू० ) अ० १। पा० १।सू०३] 'शास्त्रयोनित्वा'दिति न्यायादलौकिकोऽर्थः श्रुत्यैकसमधिगम्य इत्यत्र न विप्रतिपद्यामहे। किन्तु स्त्रीशूद्रादीनामितिहासपुराणादिद्वारा चाण्डालादीनां च स्मृत्याचारवदुपदेशपारम्पर्येण ज्ञानमपि श्रुतिमूलमेव भवति यथा तेषां सामान्याऽहिंसाधर्मादिज्ञानम्। अन्यथा तदसिद्धिप्रसङ्गादिति ॥ ७८ ॥

## अतो ह्यविपक्कभावानामपि तल्लोके ॥ ७९ ॥

यतः सर्वाधिकारोऽतः खलु येषामत्र परभक्तिर्विपक्कभावं न गता तेषां श्वेतद्वीपे भगवल्लोके परभक्तिसाधनानुष्ठानं स्मर्यते। यथा [ महाभार० ] शां०। मोक्षधर्मे। नारायणीये। ( अ० ३३८। )

क्षीरोदधेरुत्तरतः श्वेतद्वीपो महाप्रभः।
तत्र नारायणपरा मानवाश्चन्द्रवर्चसः ॥
एकान्तभावोपगतास्ते भक्ताः पुरुषोत्तमे।

इत्याद्युपक्रम्य तेषां परभक्तिसाधनानुष्ठानं श्रुतम्। [ महाभार- शां०। मोक्षधर्मे। अ०३३८। ]

सहिताश्चाभ्यधावन्तस्ततस्ते मानवा द्रुताः।
कृताञ्जलिपुटा हृष्टा नम इत्येव वादिनः ॥

ततो विवदतां तेषामश्रौषं विपुलध्वनिम्।
बलिः किलोपक्रियते तस्य देवस्य तैर्नरैः॥

इत्यादि। तस्मात् सर्वत्र तदधिकार इति। अत एव [ उत्तरमीमांसासू०। अ०१। पा०३। सू२६ ]'तदुपर्यपि बादरायणेन सम्भवादि'ति सूत्रितम्॥ ७९॥

अथ विपक्वभावानामपि कथं न तल्लोक इत्युपोद्घातेनोच्यते।

## क्रमैकगत्युपपत्तेस्तु॥ ८०॥

तुश्चागतशङ्काव्यवच्छेदार्थः। नारायणीय एव श्रूयते ( महाभार०। शां०। अ०३४६।) येऽतिनिष्कलुषा लोके पुण्यपापविवर्जिता इत्युपक्रम्य आदित्यमण्डलद्वारा अनिरुद्धप्रद्युम्नसंकर्षणव्यूहक्रमेण गतिमभिधायाभिहितम्। [ महाभार०। शां०। अ०३४६। ]

समाहितमनस्कास्तु नियताः संयतेन्द्रियाः।
एकान्तभावोपगता वासुदेवं विशन्ति ते॥ इति।

क्रमगत्यभिधानम्। तथा पश्चादुक्तम्। [ महाभार०। शां०।मोक्षधर्मे। अ०३५०। ]

ये तु दग्धेन्धना लोके पुण्यपापविवर्जिताः।
तेषां त्वयाभिनिर्दिष्टा पारंपर्यक्रमाद्गतिः॥
चतुर्थ्यां चैव ते गत्यां गच्छन्ति परमं पदम्।
नूनमेकान्तधर्मोऽयं श्रेष्ठो नारायणप्रियः॥
अगत्वा गतयस्तिस्रो यद्गच्छन्त्यव्ययं हरिम्।

इत्येकगत्यभिधानं च पक्वभक्तिविषयत्वेनोपपद्यते। अन्यथा विरोधात् तस्मादपक्वविषयस्तत्तल्लोकलाभ इति॥ ८०॥

## उत्क्रान्तिस्मृतिवाक्यशेषाच्च॥ ८१॥

उत्क्रान्तौ। गी०। अ०८। श्लो०१०। भक्त्या युक्तो योगबलेन चै

वेत्युपक्रम्य (गी०। अ०।८। श्लो० १३)।

ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्।
यः प्रयाति त्यजन् देहं स याति परमां गतिम्॥

इत्युक्तम्। तत्र च वाक्यशेषः। (गी०। अ०८। श्लो० २४)।

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः॥ इति

क्रमाद्गतिः श्रुता। तथा। (गी०। अ०८। श्लो०१६)।

आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते॥

इतिवाक्यशेषे लोकोपक्रमादुपशब्दमहिम्ना च तत्समीपलोकप्राप्तिरविपक्कभावानामेव युक्ता विपक्कभावस्य न तल्लोकगमनमपि फलं युज्यते तत्फलस्याक्षयित्वात् तल्लोके साधनाननुष्ठानश्रवणाच्च। किञ्च अविपक्कभक्तेस्तत एव क्रममुक्तिसिद्धौ तत्कालीनस्मरणविधिवैयर्थ्यप्रसङ्गात्। न च तेन परभक्तिसमुच्चयो घटते। (गी०।अ०८। श्लो० २२) पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्ययेत्यन्यनिरपेक्षमोक्षसाधनत्वावगतेः। तस्मात् तल्लोकेऽप्यधिकारः। भारतभूमेस्तु (विष्णुपु०। अं० २। अ० ३। श्लो० ५)

न खल्वन्यत्र मर्त्यानां भूमौ कर्म विधीयते।

इत्यनेन कर्मोत्पत्तिहेतुतैव। भक्तिस्तु न कर्मात्मिकेत्युक्तं प्राक् तदङ्गानामप्राप्तिः स्यादिति चेन्न प्रधानप्राप्तावेवाङ्गप्राप्तेर्निषादस्थपतियागाङ्गवदिति। शूद्रादीनां तु वैदिकमन्त्रजकर्मनिवृत्तिर्न तु स्मरणकीर्त्तनादेर्भक्तिसाधनस्येति तावतैवाधिकारसिद्धौ न विद्याप्रयुक्तिकल्पना युक्ता॥ ८१॥

अस्तु तर्हि महापातकिनामपि परभक्तावेवाधिकारस्तथा तदङ्गाङ्गवेदानुवचनादावपीत्यत आह।

**महापातकिनां त्वार्तौ ॥ ८२ ॥**

पतनहेतुपापरतानां च पुनरार्त्तिभक्तावेवाधिकारः प्रायश्चित्तवन्नान्यत्र तत्पापक्षयस्य सर्वापेक्षयाऽभ्यर्हितत्वात् भुञ्जानोवर्द्धयेत् पापमित्यादिना। तदपगमे तु सुतरामधिकारसिद्धिः ॥ ८२ ॥

अथैकान्तिकप्रस्तावात् सर्वधर्मः किं परभक्तितो भिन्न इति शङ्कापिशाचीमपाकरोति।

**सैकान्तभावो गीतार्थप्रत्यभिज्ञानात् ॥ ८३ ॥**

सा परा भक्तिरेवैकान्तभावो नान्यः कुतः गीतार्थेन प्रत्यभिज्ञाश्रवणात्। यथा नारायणीय एव (महाभार०।शां०।मोक्षध०।अ० ३५०।

सहोपनिषदो वेदान् ये विप्राः सम्यगास्थिताः।
पठन्ति विधिमास्थाय ये चापि यतिधर्मिणः ॥
ततो विशिष्टां जानामि गतिमेकान्तिनां नृणाम्।
केनैष धर्मः कथितो देवेन ऋषिणाथ वा ॥



इति प्रश्ने प्रत्युत्तरम्।

समुपोढेष्वनीकेषु कुरुपाण्डवसेनयोः
अर्जुने विमनस्के वै गीता भगवता स्वयम् ॥ इति।

तस्मादेकान्तिता परभक्तिरिति ॥ ८३ ॥

अथ गौण्योऽपि साक्षान्मुक्तिं जनयन्तु को दोषस्तत्राह।

**परां कृत्वैव सर्वेषां तथाह्याह ॥ ८४ ॥**

परां भक्तिं कृत्वैव सर्वेषां मुक्तावुपयोगः। तथा हि सहेतुकं भगवानाह (गी०। अ० १८।श्लो० ६८।)

य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयम् ॥ इति।

तच्चैतद्धर्मस्योपदेशफलमपि ब्रह्मभावापत्तिरित्येवार्थसिद्धौ भक्तिं

मयि परां कृत्वेति किमर्थमाह । तस्या मोक्षसाधनत्वेन श्रुतत्वात्। अत एवोपरिचरवसोः ( महाभार० । शां० । अ० ३३७ ।) आत्मराज्यं धनं चेत्यादिना परमेश्वरानुरक्तिरूपाया भक्तेर्लिङ्गं प्रदर्शितमिति स्वतः प्रयोजनत्वाभावात् । तस्मात् सर्वेषां मुक्तिहेतुत्वेन श्रुतानां परभक्तिजननेन मुक्तावुपयोग इत्यभिप्राय उन्नीयतइति। नचोभयजनकत्वं तस्य कर्मत्वेन मोक्षाजनकत्वात् । एवञ्च दृष्टार्थता भवति वाक्यस्येति ॥ ८४ ॥

इत्याचार्यस्वप्नेश्वरविद्वद्वरविरचिते शाण्डिल्यशतसूत्रीये भाष्ये द्वितीयाध्यायस्थ द्वितीयमाह्निकम् ॥ ॥

समाप्तश्चाध्यायः ॥ २ ॥

भजनीयोत्तमत्वेन भक्तेरुत्तमता यतः ।
भक्तस्तद्भावतश्चात्र भजनीयो निरूप्यते ॥

## भजनीयेनाद्वितीयमिदं कृत्स्नस्य तत्स्वरूपात् ॥ ८५॥

ज्ञानाधीना ज्ञेयसिद्धिरिति तन्त्रेषु निर्णयः ।
ज्ञानं सत्ता न सा जातिर्जात्यादौ तदसत्त्वतः ॥
सत्त्वे वा नेष्टसम्बन्धकल्पनागौरवादपि ।
तस्माज्ज्ञानं परं ब्रह्म सर्वत्रानुगतं स्वतः ॥
तदभेदो दृश्यमात्रे दृश्यभेदस्तु सत्परे ।
घटो ज्ञानमितीदृक् स्यात् प्रत्ययः सन्निवेति चेत् ॥
अस्ति स्वरूपधीर्नैव सत्यत्वेनानुपस्थितेः ।
तदुपादानविषये ज्ञानेच्छाकृतिहेतुना ॥
तासां सविषयत्वेन हेतुत्वे लाघवं महत् ।
यत् तत् सविषयं ब्रह्म गुणवन्नैव गौरवात् ॥
कालवैयोपाधिकता तज्ज्ञातृत्वादिकल्पना ॥ ८५ ॥

## तच्छक्तिर्माया जडसामान्यात्॥८६॥

तस्य ब्रह्मण ऐश्वर्यशक्तिर्मायेति गीयते (गी०अ०७।श्लो०१४।)

दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते॥
मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्।
हेतुनानेन कौन्तेय जगद्विपरिवर्त्तते॥
तन्मायात्वं तु कार्याणां वैचित्र्यान्नानृतत्वतः।
कार्यसत्त्वोपपत्त्यर्थं ब्रह्मसत्ताश्रुतेरिति॥
मिथ्यात्वस्यानुषक्तेश्च तन्मिथ्यात्वं न साम्प्रतम।
तत्त्वज्ञानेन बाध्यत्वं मिथ्यात्वमिति चेन्नहि॥
मिथ्यात्वस्याप्यतथ्यत्वात् सत्यत्वं सुतरां स्थितम।
मिथ्यात्वस्य च सत्यत्वे दृश्यसत्यत्वमागतम्॥
अनीकानामभानाच्च भास्यत्वे तु सदेव तत्।
रज्जौ सर्पादिभानं यदन्यथाख्यातिरेव सा॥
अन्यस्य सदसत्त्वाभ्यां बाधाधारव्यवस्थितेः।
सा माया जडसामान्यं ज्ञेयत्वं नित्यमेव तत्॥
अन्यथा तु व्यवस्था स्यात् तस्माच्चिज्जाड्यनित्यता॥ ८६ ॥

## व्यापकत्वाद्व्याप्यानाम्॥८७॥

एवं व्यापकतत्त्वेभ्यो व्याप्यतत्त्वसमुद्भवः।
व्यापकानां हि तादात्म्याद्व्याप्योपादनता मता॥
न तावत् समवायेन भेदसम्बन्धगौरवात्।
शब्दानां समयोऽप्येवं शृङ्गग्राहिकया लघुः॥
सत्त्वेन सर्वकार्येषु कारणत्वं परेशितुः।
निमित्तत्वं हि तद्बुद्धेर्बोद्धव्येष्वनुगत्वतः॥



बुद्धेस्तु साक्षिभास्याया अबोध्यत्वं यतो धियः।
बोद्धव्याया बुद्धितत्त्वव्यभिचारेऽपि सम्भवेत्॥
सुप्तोत्थितस्य प्रलयाद्बुद्धेः प्रथममुद्भवः।
कार्यकारणभावादि बुद्ध्या निर्माति स प्रभुः॥
स्वतो निर्विषयाप्येषा चैतन्योपाधिभावतः।
तैलादिवत् प्रदीपस्था स प्रकारप्रकाशिनी (छां० ।)
करिष्यामीतिसङ्कल्पादहङ्कारोद्भवस्ततः।
स ऐक्षत बहुस्यामित्येवमादिश्रुतिस्मृतेः॥
बुद्धेर्विकारेष्विच्छादावनुगत्वादहङ्कृतेः।
साप्येकतत्त्वं तत्त्वे तु बुद्धिर्व्यापकभावनात्॥
ईशोऽहं कृतिजन्यत्वात् तन्नैयत्यादहङ्कृतेः।
मात्राभूतेन्द्रियादीनामहङ्कारोऽपि कारणम्॥
तत्र शब्दस्पर्शरूपरसगन्धत्वसंज्ञया।
सामान्यान्येव शब्दादिस्थूलानां चापि हेतवः॥
सर्वत्र ग्रह एव स्यात् तत्त्वानामिति चेदतः।
विकारग्रहणे जातिग्रहवत् तद्ग्रहस्थितेः॥
एवं व्यापकतत्त्वानां व्याप्येष्वनुगमः क्रमात्।
ब्रह्मादिसर्वतत्त्वानां घटोपादानता स्फुटम्॥
न कर्मणान्यथासिद्धिरिह तत्त्वस्य युज्यते।
तादात्म्यादन्यथासिद्धेरतादात्म्यप्रयोजकम्॥
एवं कारणतत्त्वानां मोक्षोपायतया पुनः।
निर्मितिः प्राणिबुद्ध्यादेरतादात्म्यात् पृथक् पृथक्॥
आसर्गप्रलयादीनां बुद्धिर्नास्ति न यत् क्वचित्।
सुषुप्तौ जीवबुद्धीनां लयोनन्तः स मोक्षणे॥ ॥ ८७॥
अथानीश्वरसाङ्ख्यानां बुद्धेः सर्गो न युज्यते।

क्रमाद्विनिगमाभावादित्येतत् सूत्रमुच्यते ॥

**न प्राणिबुद्धिभ्योऽसम्भवात्॥ ८८ ॥**

क्रमाद्देवर्षिसर्गादिः श्रूयते कस्य बुद्धितः ।
सम्भवाद्भूतसर्गोऽयं तस्मादीशोऽस्ति बुद्धिमान्॥ ८८ ॥

**निर्मायोच्चावचं श्रुतीश्च निर्मिमीते पितृवत्॥ ८९ ॥**

उच्चावचानि भूतानि धर्माधर्मानुसारतः ।
निर्माय निर्मिमीतेऽसौ वेदांस्तद्धितकाम्यया ॥
यथा पितोत्पाद्य पुत्रानज्ञातौ ज्ञापयत्यपि ।
हिताहितपरीहारौ वाक्यैस्तद्वदयं प्रभुः ॥ ८९ ॥

**मिश्रोपदेशान्नेति चेन्न स्वल्पत्वात्॥ ९० ॥**

अथायमीश्वरो नैव हितः पितृसमो यतः ।
पापसाधनहिंसाभिर्मिश्रयागोपदेशनात् ॥
इति चेन्न प्रधानांशफलसौख्याद्यपेक्षया ।
अङ्गहिंसाफलाल्पत्वान्नाहितस्तद्विधानकृत् ॥
ननु क्रत्वङ्गहिंसायाः प्रधानैकफलत्वतः ।
न सामान्यनिषेधस्य विषयत्वं प्रसज्यते ॥
कुर्यान्न कुर्यादित्येवं विकल्पस्त्वन्यथा भवेत् ।
तस्माद्विशेषादन्यत्र स्याद्यदाहवनीयवत् ॥
अत्रोच्यतेऽङ्गहिंसायाः स्यादपूर्वस्य हेतुता ।
पापहेतुश्च सामान्यहिंसेत्येवाऽविरोधिता ॥
अथ प्रबलदुःखस्याननुबन्धीष्टहेतुता ।
विध्यर्थोऽयं नञायुक्तस्तदभावस्य बोधकः ॥
तथा च सर्वान्मा हिंस्यादस्य दुःखाद्यहेतुता ।
सत्यं यागाङ्गहिंसातो यद्दुःखं प्रबलं न तत् ॥
प्रधानफलसौख्यादेर्नैयत्यान्नान्तरीयकम् ।



अन्यथातिप्रसङ्गः स्यात् प्रबलत्वानिरुक्तितः॥
तस्माज्जातिविशेषोऽयं दुःखेषु प्रबलत्वता।
प्रायश्चित्तादिमरणे प्रयागमरणेऽपि वा॥
आत्महत्याकृतं दुःखं तत्फलापेक्षया लघु।
अतः प्रत्यवमर्शी हि प्राह पञ्चशिखोऽपि तत्॥
स्वल्पत्वान्न बलीयस्त्वाद्यत्र दुःखस्य गौरवम्।
पर्यग्निकरणोत्सर्गास्तत्र श्रुत्यैव दर्शिताः॥

[ मनु सं०। अ० ३। श्लो० ६८ ]

• पञ्चसूना गृहस्थानामिति स्मृतिषु चोदितम्।
न सामान्यविशेषोक्तिर्न शून्ये सुतरां यथा॥

[ विष्णुपु०। अं० ३। अ० ६। श्लो० १८।१९ ]

रङ्गोपजीवी पशुहा नरकं शरणं व्रजेत्॥ ९०॥
श्रुतिप्रसङ्गाच्छ्रौतानामपूर्वमथ चिन्त्यते।
कर्तृभोक्तृगतं तत् किमथ वा परमेश्वरे॥

फलमस्माद्बादरायणो दृष्टत्वात्॥ ९१॥

[ उत्तरमीमांसा०। अ० १। पा० १। सू० २ ]

राजादिरोषतोषाभ्यां दृष्टत्वात् कर्मणां फलम्।
अस्माद्ब्रह्मण एवाह भगवान् बादरायणः॥
तन्न कर्तृगतं पुत्रे जातेष्टिफलदर्शनात्।
अथ भोक्तृगतो भोगः कस्मिन्नित्येव चिन्त्यते॥
अन्योन्याश्रय एव स्यादुभयोः स्वव्यपेक्षणात्।
तस्माद्दृष्टतया रोषतोषाभ्यां परमेशितुः॥
हिताहितफलप्राप्तिः फलोद्देश्यगता भवेत्।
नाप्युद्देश्यगतत्वेन व्यापारान्तरकल्पनम्॥
अन्यथा राजसेवादावप्यपूर्वं प्रसज्यते।

अत एवेश्वरप्रीतिप्रदत्वं कर्मणां श्रुतम् ॥ ५ ॥

[ गी०। अ० १२। श्लो० २० ]

ये तु धर्मामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥

रोषतोषादिसत्त्वेऽपि न संसारित्वमीशितुः ।
तद्वृत्तत्वाददुःखत्वान्नित्यमुक्ततयापि च ॥ ११ ॥

## व्युत्क्रमादप्ययस्तथा दृष्टम् ॥ १२ ॥

प्रलयो व्याप्यतत्त्वानां व्यापकेषूत्क्रमान्मतः ।
व्यापिकायां मृदि व्याप्यघटादिलयदर्शनात् ॥ १२ ॥

इत्याचार्यश्रीस्वप्नेश्वरविद्वद्वरविरचिते शाण्डिल्यशतसूत्रीये भाष्ये तृतीयाध्यायस्य प्रथममाह्निकम् ॥ १ ॥

जीवस्य ब्रह्मभावो हि मुक्तिरित्यभिधीयते ।
तद्विवेकतयात्रापि भजनीयविवेचनम् ॥

अन्यस्य कथमन्यत्वं घटेतेति वितर्कयन् ।
जीवानां भगवद्भावे योग्यतामाह सूत्रकृत् ॥

## तदैक्यं नानात्वैकत्वमुपाधियोगहानादादित्यवत् ॥ १३ ॥

( छान्दो० ) सर्वं खल्विदं ब्रह्म नेह नानास्ति किञ्चन ( गी० अ० १३। श्लो० ३३।३४ )।

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।

इत्यादिभिस्तस्यैकत्वमेव स्वभावः । उभयथा चात्मप्रत्ययः स जीवोपाधिबुद्धिरात्मानुकृतः। तथा च श्रुतिः 'एकधा बहुधा चैव दृश्यते जलचन्द्रवत्'। ( विष्णुपु० अं० २। अ० १६। श्लो० १२ )।

सितनीलादिभेदेन यथैकं दृश्यते नभः।

भ्रान्तदृष्टिभिरात्मापि तथैकः सन् पृथक् पृथक्॥

इति। ततः परभक्त्या जीवोपाधिबुद्धिहाने सति पुनरेकत्वमप्यविरुद्धं यथादित्यस्य प्रकाशात्मनः प्रतिबिम्बोपाधिदर्पणाद्यपगमे तद्वत्॥ १३॥

## पृथगिति चेन्न परेणासम्बन्धात् प्रकाशानाम्॥१४॥

पृथगेव परस्परमत्यन्तभिन्नाः प्रकाशात्मान एव जीवाः अन्यथा श्चिन्मुक्तः कश्चिद्बद्ध इति व्यवस्था न स्यादिति चेन्न कथंचिदनीश्वरसांख्यानां तथा संभवेऽपि सेश्वरसांख्यानां तदसम्भवात्। कथम्। प्रकाशात्मनां परेण परमेश्वरेण सह द्रष्टृत्वदृश्यत्वलक्षणसम्बन्धाभावात् तेषां स्वप्रकाशतयादित्येनैव प्रदीपानामप्रकाशनात्। तथानीश्वरत्वमसर्वज्ञत्वं ज्ञेयत्वं च ब्रह्मणः स्यात्। अथ प्रकाश्यास्तेषां ाज्यप्रसङ्गान्नापि मिथोबुद्धिवृत्त्या प्रकाश्यत्वम्। तद्धि तमोऽभिभूयैव नेवान्तःकरणसत्त्ववृत्या। नच तदयोग्यत्वे तत् सम्भवति। न ल्वावरणनिवृत्तावपि दीपो दीपान्तरप्रकाश्य इति बाह्याभ्यन्तरप्रकाशयोः कश्चिदौपाधिकोऽप्येकधर्मो येन [बृहदा०] 'स्वयं ज्योतिरेवायं पुरुष' इत्यादौ गौणो ज्योतिःशब्दः। तस्माच्चिदात्मा जगत्प्रकाशकत्वेनैव सिध्यतीति न तत्र परापेक्षा। किञ्च मनोधर्मभ्रमतत्त्वधियोरधिष्ठानतया चात्मसिद्धिरप्रत्यूहैव बुद्धिवृत्तीनां तु गौण एव ज्ञानत्वसुखत्वव्यवहारः।

किं मानमात्मनां भेदे बुद्धितत्त्वभिदा स्थिता।

बन्धमोक्षव्यवस्थाने नित्यमुक्तात्मनां कुतः॥ १॥ इति॥ १४॥

अथ विकारिण एव सत्तात्मानो ज्ञानेच्छादयस्तद्गुणाः जानामीच्छामि सुखीत्यादिप्रत्ययादिति मतं निरस्यन्नाह।

## न विकारिणस्तु कारणविकारात्॥ ९५॥

न ज्ञानादिविकारवन्त आत्मानो भवितुमर्हन्ति कुतः सुखोपल-
देः करणगतत्वेन ज्ञानादीनामुपपत्तेरात्मनामविकारित्वात्। तथा
सुखोपलब्धिः सकरणिकेत्याद्यनुमाने तादृशकरणसम्बन्धस्य तादा-
। सत्त्वात् सुखादयो नात्मविकारा आत्मनि प्रतीतत्वाद्गौरत्वादि-
त्यनुमानाच्च। एवमहन्त्वस्यापि कारणतादात्म्येनैव मनसा ग्रहण-
सुषुप्तौ मनोलये तदग्रहणम्। कालोपाधीनां कालत्ववदिति दि-
९५॥

अथ कथं जीवस्य ब्रह्मभाव इत्यपेक्षायामाह।

## अनन्यभक्त्या तद्बुद्धिर्बुद्धिलयादत्यन्तम्॥ ९६।

गी०। अ० ८। श्लो० २२)

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम्॥

ति श्रुतम्। तथा [ नृसिंहपु०। ] भक्त्यैकलभ्ये पुरुषे पुराणे
किमर्थं क्रियते न यत्न इति। तस्मात् परभक्तिमात्रेण बुद्धेरत्य-
ये सति ब्रह्मानन्दावाप्तिलक्षणा मुक्तिरित्यर्थः। तथा च तदीयबु-
लयप्रागभावसहवृत्तिब्रह्मानन्दावाप्तिर्मुक्तिरिति तल्लक्षणं सूचित-
अथ ब्रह्मानन्दावाप्तेः सिद्धत्वेनापुरुषार्थत्वमिति चेन्न ग्रामादिव-
ष्टतया पुमर्थत्वात्। अत्र बुद्धिर्जीवोपाधिर्मता भगवत एव बु-
त्वाभ्युपगमात्। अन्यथा इदं सुखमत्र सुखत्वमिति ज्ञानाज्जाते-
तया तद्विशिष्टस्य पुमर्थाभावप्रसङ्गात् ईहाकृत्योर्विकल्पकत्वा-
त्। तस्मादसिद्धोपरागेण सिद्धे अपीच्छाकृती इति। कृत्यसा-
ज्ञानं प्रतिबन्धकमिति चेन्न स्वेष्टत्वे बलवदनिष्टानुबन्धित्वतिरो-
दिवोत्कटरागेण ... प्रवृत्तेर्मितिद्विम-

